# जन्मान्तरवादः

[ सार्वभौमदर्शनम् ]



प्रणेता
आचार्य केदारनाथत्रिपाठी 'दर्शनरत्नम्'
भू० पू० दर्शनविभागाध्यक्षः
काशीहिन्दूविश्वविद्यालयः
वाराणसी

८४, जवाहरनगर (एक्सटेंशन)
वाराणसी—२२१०१०
१९८५

# जन्मान्तरवादः

[ सार्वभौमदर्शनम् ]

प्रणेता

**आचार्यकेदारनाथ त्रिपाठी "दर्शनरत्नम्"**

न्याय-वेदान्त-सांख्ययोगाचार्यः

विद्यावाचस्पतिः ( डी० लिट् )

काशीहिन्दूविश्वविद्यालये

भू० पू० दर्शनविभागाध्यक्षः





प्रकाशकः

**केदारनाथत्रिपाठी**

८४, जवाहरनगर ( एक्स्टेंशन )

वाराणसी—१०

१९८५

प्रकाशकः

केदारनाथत्रिपाठी

८४, जवाहरनगर ' एक्सटेंशन )

वाराणसी–२२१०१०



प्रथमसंस्करणम् ११००

मार्गशीर्ष पूर्णिमा, २०४२ वैक्रमाब्दः

मूल्यम्— ३० रु०

एतद्ग्रन्थप्रकाशनमुत्तरप्रदेश-संस्कृत-अकादमी, लखनऊद्वाराऽनुदत्तेन त्रिसहस्रमितार्थसाहाय्येन कृतम्

मुद्रकः

बसन्तूराम

श्रीविद्या प्रेस

छित्तूपुर, वाराणसी-५

# JANMANTARVADAH

## [Sarvabhaum Darshanam]




By

**Acharya Kedarnath Tripathi**

'DARSHANRATNAM'

Vachaspati (D. Lit.)

Ex-Head of The Department of Darshan, B. H. U.

Ex-Senior Scholer. 'Sastra-Chudamani',

Ministry of Education,

Govt. of India,

and

Principal Investigator, U. G. C.

Publisher

K. N. TRIPATHI

1985



# समर्पणम्

स्मृतिमात्रेण शेषेषु पित्रोः पादाम्बुजन्मसु ।
जन्मान्तरवादनाम्नी कृतिरेषा मुदेऽर्प्यते ॥



**ग्रन्थकर्तुः पितृचरणाः स्व० पं० श्रीरामविहारित्रिपाठिनः**

| जन्म | शिवसायुज्यम् |
| --- | --- |
| भाद्रशु० पूर्णिमा १९५० वि० सं० | पौष कृ० अष्टमी २०२५ वि० सं० |

[छायाचित्रम् १९९५ वि० सं०]

# प्रास्ताविकम्

मत्स्याद्याः समवतरन्ति यत्र नित्यं, रक्षार्थे नरहरिरामकृष्णमध्याः ।
कल्क्यन्ताः समयमुपेत्य विश्ववन्द्यां, भूमिं तां - पदि हि मातरं नमामः ॥

अथेदानीं प्रस्तूयते चिरप्रतीक्षितप्रकाशनो मया बहुपूर्वप्रणीतोऽप्यदृष्टविशेषप्रतिबन्धात् प्रकाशनावसरमलभमानो जन्मान्तरवादाभिधानोऽयमभिनवो ग्रन्थः संस्कृतवाङ्निबद्धः श्रीविश्वेश्वरप्रसादात् प्रकाशमानायितः । भारतदेशोऽयं धर्मप्राणत्वेन विश्वविश्रुतोऽनादिकालात् समुज्जृम्भते समस्तभूमण्डले । तत्र को धर्म इति जिज्ञासायां "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति निरणैषीद् वैशेषिकदर्शनप्रणेता लौकिकालौकिकसमस्तपदार्थविवेचको जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुः परमकारुणिको भगवान् कणादः । अस्मिन् धर्मस्वरूपे नास्ति विवादो वैदिकावैदिकसर्वदार्शनिकानां भारतभूप्रसूतानाम् ।

इत्थञ्च कदाचिल्लौकिकाभ्युदयसाधकमपि कर्म यदि निःश्रेयसविरोधि, न तर्हि तद् धर्मः । अतो यथा निःश्रेयसाविरोधेन क्रियमाणमभ्युदयसम्पादकं कर्म धर्मस्तथाभ्युदयाविरोधेन क्रियमाणं निःश्रेयसप्रयोजकमपि कर्म धर्म इति महर्षिकणादोऽभिप्रैति । तत्र प्रथमः प्रवृत्तिरूपो द्वितीयश्च निवृत्तिरूप इति विशेषः । एतेनाभ्युदयनिःश्रेयसयोरुभयोः सिद्धिर्मानवजीवनस्य लक्ष्यभूतेति, तथोभयसम्पादकधर्मयोरवश्यकर्तव्यताऽपीति च मानवस्य कृते निर्धार्यते । न चोभयलक्ष्यसाधनानुष्ठानमनपेक्ष्यमशक्यं चेति वाच्यम्, मानवजीवनस्योभयलक्ष्यकत्वेऽनपेक्षणीयत्वाऽनुपपत्तेर्गौणमुख्यभेदेनोभयानुष्ठानस्य शक्यत्वाच्च । तत्राऽभ्युदयो लोकेन सम्बद्ध ऐहिक इत्युच्यते, निःश्रेयसञ्च लोकान्तरेण सम्बद्धमिति पारलौकिकमित्युच्यते । अनयोरेव चत्वारः पुरुषार्था धर्मार्थकामापवर्गा अन्तर्भूताः । यो हि जनो नाऽभ्युपैति जन्मान्तरसत्तामात्मनो नित्यतां च, स तु यथातथा सततमर्थकामयोरेव रममाणः पारलौकिकनिःश्रेयसमवगणयन् निःशङ्कं पापकर्माण्याचरेत् परोपघातादीनि । किन्त्वेवमाचरणे तस्य न केवलं निःश्रेयसमेव बाधितं भवति, किन्तर्हि ? लोकेऽपि कलहसंघर्षादिजननेनाऽभ्युदयस्यापि प्रतिद्वन्द्वयेव सदशान्तये तत्कल्पते ।

स्थितिमिमां विज्ञानतकनीक्योः प्रभावादभ्युदयस्य सर्वोच्चशिखरमारूढान्यपि राष्ट्राण्यनुभवन्तितराम्। भारतं त्वद्यापि तेषां दिशानिर्देशकमिति सतृष्णमितो निरीक्षते संसारः। अतएव जगद्धितं समीहमानानां भारतीयमनीषिणामद्याऽप्युदात्तो नादः—धर्मो जयतु, अधर्मो नश्यतु, प्राणिषु सद्भावनाऽस्तु, विश्वस्य कल्याणमस्त्विति। तत्र धर्मे जयति सुतरामधर्माभिभवस्ततः प्राणिषु सद्भावनाऽपि सुसम्पादा, तस्यां सत्यामेव विश्वकल्याणमित्यनिवार्यं पौर्वापर्य्यमपि।

एतद्ग्रन्थप्रणयनसमये मम मनस्यभूद् यज्जन्मान्तरसम्बन्धे सार्वभौमदृष्टि प्रदर्शयितुकामेन मया पौरस्त्यपाश्चात्यप्राचीनाऽर्वाचीनसकलप्रमुखविचारकाणां विचारा इहावश्यं संकलय्योद्धरणीया इति। एवं सत्याद्यशङ्कराचार्य-रामानुजाचार्य—वल्लभाचार्यप्रभृतीनामपि वचनान्युद्धरणीयान्यभूवंस्तथापि तेषां निर्विचिकित्सवैदिकत्वेन प्रस्थानत्रयीव्याख्यातृत्वेन च वेदोपनिषद्गीतानां दर्शनसूत्राणां च समुद्धरणेनैव सिद्धार्थतया तानि नोदाहृतानि। अत एव सूत्रकारानुदाहृत्य तद्भाष्यवार्तिककारादयोऽपि पृथङ्नोदाहृता इति।

एवं दृष्टौ सत्यामपि येषामपि कबीरदासप्रभृति 'सन्त' पदवाच्यानामरविन्दप्रभृतियोगिनां गुरुनानक-स्वामिदयानन्द-स्वामिविवेकानन्दप्रभृतीनां सम्प्रदायनेतॄणां, सरराधाकृष्णन्प्रभृतिदार्शनिकानां वैदिकत्वाविशेषेऽपि स्वतन्त्रविचारकाणां, तथा महात्मगान्धीप्रभृतिदेशनेतॄणामपि च सतां स्वतन्त्रविचारकत्वेन प्रसिद्धानामैदंयुगीनानां विचारा भारते सांस्कृतिकैकताधाराया अविरलप्रवहमानायाः समुद्बोधनार्थं, तद्द्वारा चेदानीं प्रवर्तमानविघटनभावनानिराकरणेन भारतस्यैकताऽखण्डतयोः सुदृढीकरणे परमोपयोगितया चेह प्रादर्शिषतेति वेदितव्यम्। जन्मान्तरवादैकसूत्रग्रथिता ह्येते मनीषिणो भारतैकताऽखण्डतयोः कृत एवेति वयं प्रतीमः। इदमभिप्रेत्यैवैतदीयानामेतद्ग्रन्थविषयसम्बन्धिनिबन्धानामन्वेषणाय साक्षात्तेषां विचारसङ्ग्रहाय च मया प्रयासो व्यधायि। तदर्थं तैः सह पत्रव्यवहारप्रसङ्गे येषामुत्तराणि यथोपलब्धानि तानि तथैवात्र पृथक् सन्दृब्धानि। तेष्वरविन्दयोगिनः पाण्डीचेरीतः, सर राधाकृष्णन्महोदयस्य तदानीन्तनोपराष्ट्रपतेर्दिल्लीतः, तदानीन्तनभारतप्रधानमन्त्रिणः पण्डितजवाहरलालनेहरोर्दिल्लीतः प्राप्तानि पत्राणि प्रमुखाणि सन्ति। तेषामुत्तरपत्रैरहं भृशमुत्साहितोऽनुगृहीतश्च तान् सश्रद्धं मनसा स्मरामि।

एतद्ग्रन्थप्रकाशने उत्तरप्रदेश-संस्कृत-अकादम्या राजकीयसंस्थया त्रिसहस्रमुद्रामितं साहाय्यं प्रदाय भृशमहमनुगृहीतः प्रोत्साहितश्चेति तदध्यक्षाणां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य भूतपूर्वकुलपतीनामाचार्यश्रीकरुणापतित्रिपाठिमहाभागानां वस्तुगत्या निरुपधिकरुणापतित्वमुपेयुषामत्यन्तं कृतज्ञोऽस्मि। एवं संस्कृत-अकादम्या निदेशकचरस्य श्रीधर्मनारायणत्रिपाठिमहोदयस्य, वर्तमाननिदेशकस्य श्रीप्रयागदत्तचतुर्वेदिमहोदयस्य च नितान्तमनुगृहीतोऽस्मि, याभ्यामनुदानस्वीकृतितत्प्रदानाभ्यां कार्यमिदं पूर्णतामगात्। सहैवोक्तसंस्थायाः सहायकनिदेशकपदमधिष्ठिताय डा० श्रीचन्द्रकान्तद्विवेदिमहोदयायापि हार्दिकधन्यवादानर्पयामि, येन ह्येतत्कार्ये यथासमयं निजबहुमूल्यपरामर्शं प्रदाय महत्सौकर्यमापादितम्।

पुनश्च परमहंसपरिव्राजकाचार्याणां महामण्डलेश्वराणां काश्यादिदक्षिणामूर्तिपीठाद्याश्रमाध्यक्षाणाम् १००८ श्रीमहेशानन्दगिरिमहाराजानां भृशमनुगृहीतोऽस्मि, यैरस्मिन् सारस्वते यागे स्वीयः शुभाशीर्वादो मयि व्यधायि। एवं विद्यावैशद्ययशोवैभवविभूषितानां संस्कृतवाङ्मयगौरवभूतानां न्यायशास्त्रावताराणां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य भूतपूर्वकुलपतीनां पण्डितराजश्रीबदरीनाथशुक्लमहाभागानाम्, तथा केन्द्रीयशिक्षामन्त्रालये संस्कृतशिक्षापरामर्शदातृपदं विभूषितवतां साम्प्रतं श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालये कुलपतिपदं सुशोभयतां सदा संस्कृतवाङ्मयोन्नयनबद्धपरिकराणां निसर्गाभिरामाणां डा० श्रीरामकरणशर्ममहाभागानां, तथा विद्यासागरविद्यावाचस्पति-शास्त्ररत्नाकराणां सं० सं० वि० वि० भू० पू० साहित्यविभागाध्यक्षाणां पण्डितराज-पद्मश्री-श्रीपट्टाभिरामशास्त्रिमहानुभावानां, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयादिनैकशिक्षासंस्थानेष्वलङ्कृतोच्चपदानां संस्कृतहिन्द्युभयजगति लब्धसमप्रतिष्ठानां प्राक्तनाधुनातनोभयभाषाशास्त्रमर्मज्ञानां नैकविद्यानिवासानामाचार्य डा० श्रीविद्यानिवासमिश्रमहाभागानाञ्चाहं भृशमाधमर्ण्यं वहामि, यैरेभिर्महानुभावैर्निजभूमिकाशुभाशंसादिलेखनेरहं निकाममनुगृहीतः।

ग्रन्थस्यास्य मूर्तरूपाधाने सज्जीकरणे चाऽन्यैरपि यैः सज्जनैः सहयोगो व्यधायि, तेषु श्रीसङ्कटमोचनमन्दिरमहन्तपदभृतं डा० श्रीवीरभद्रमिश्रमहोदयं, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये पुराणेतिहासविभागे प्राध्यापकं पण्डितप्रवरं डा० श्रीकपिलदेवत्रिपाठि 'जटिल' महोदयं च प्रति स्वीयां हार्दिकीं कृतज्ञतामभिव्यनज्मि। ममास्मिन् प्रकाशनकार्ये मदीयसुयोग्या-

न्तेवासिना काशीहिन्दूविश्वविद्यालयतः सर्वप्रथमतया लब्धवेदान्तशास्त्राचार्योपाधिना साम्प्रतं काशीस्थश्रीकबीरकीर्तिमन्दिरस्य व्यवस्थापकपदं विभूषयता श्रीश्यामदासमहात्मना च कार्यान्तरव्यस्ततायामपि सपरिश्रमं प्रूफप्रेक्षणाशुद्धिसंशोधनादिभिर्यत् साहाय्यमनुष्ठितं तदर्थममुमहं निजधन्यवादाशीर्वादाभ्यां वर्धयन् तदीयनिरन्तरसाफल्याय भगवन्तं श्रीविश्वेश्वरं प्रार्थये। एवं विभिन्नपुस्तकालयाध्यक्षाणामन्यमहानुभावानामपि च भृशं कृतज्ञोऽस्मि, यैः सम्बद्धग्रन्थोपलम्भनेन मदीयं कार्यमिदं सफलं व्यधायि। अन्ते च ममास्य ग्रन्थस्य मुद्रणकार्ये सौष्ठवानयने समनोयोगं प्रयत्नशीलाय विद्याप्रेसाधिकारिणे श्रीबसन्तूरामायापि निजशुभाशीर्वादान् ददामि प्रशंसामि च तत्कार्यम्।

अतिसावधानं सम्पादितेऽप्यस्मिन् ग्रन्थे मानुष्यकनान्तरीयकात् प्रमादाज्जातानि क्वाचित्कस्खलितानि सानुकम्पं क्षमिष्यन्ते गुणैकपक्षपातिनः प्रेक्षावन्त इति सुधियो निवेदयन् ग्रन्थस्यास्य निर्विघ्नसम्पूर्तावनन्यहेतुं श्रीविश्वेश्वरं भूयो भूयो नमन् विरमामीति शम्।

विदुषामाश्रवः

**केदारनाथत्रिपाठी**

मार्गशीर्ष, अमा० २०४२ वि० सं० प्रणेता



आचार्य केदारनाथत्रिपाठी "दर्शनरत्नम्"

न्याय-वेदान्त-सांख्ययोगाचार्यः

विद्यावाचस्पतिः ( डी० लिट् )

एतद्ग्रन्थप्रसङ्गे कतिपयविचारकाणां पत्राणि—




VICE-PRESIDENT'S SECRETARIAT
NEW DELHI
The 26th July, 1952

Dear Sir,

My Views on 'Rebirth' are Found in my book on "An Idealist View of Life."

Yours Faithfully,

[signature]

Shri Kedarnath Tripathi,
P. O. Bakulhar Math,
Harihar Sanskrit College
Champaran.

श्रीमाँ

श्रीअरविंद आश्रम
पांडीचेरी
८-१२-४९

सम्मान्य महोदय !

आपने श्रीअरविन्द के नाम जो पत्र भेजा था, उसके उत्तर में सेक्रेटरी ने यह लिखने की आज्ञा दी है कि आपको श्रीअरविंद की लिखी पुस्तकें The life Divine और Letters of Sri Aurobinda पढ़नी चाहिये। दोनों पुस्तकें अंगरेजी में हैं। आपके प्रश्नों का समाधान उन पुस्तकों से हो जायगा।

विशेष श्रीभगवान् की दया।

भवदीय
चन्द्रदीप

श्रीकेदारनाथ त्रिपाठी
हरिहर संस्कृत कालेज
बकुलहर मठ, चम्पारन

**PRIME MINISTER'S SECRETARIAT, INDIA**

पत्र संख्या : १४८६२      New Delhi      The १२-१२-१९४९

प्रिय महोदय,

आपका ११ नवम्बर का पत्र पं० जवाहरलाल नेहरू को प्राप्त हुआ।

समयाभाव के कारण पण्डितजी "पुनर्जन्म पर सार्वभौम विचार" [ जन्मान्तरवादः (सार्वभौमदर्शनम्) ] नाम की पुस्तक के लिए लेख लिखने में असमर्थ हैं।

भवदीय<br>
**द्वारकानाथ काचरू**<br>
प्राइवेट सेक्रेटरी<br>
माननीय प्रधानमन्त्रीजी

श्रीकेदारनाथ त्रिपाठी<br>
मु० पो० बकुलहर, चम्पारन

# भूमिका

महामेधाविना श्रीकेदारनाथत्रिपाठिमहोदयेन प्रणीतः सार्वभौमदर्शना-परनामा जन्मान्तरवादसंज्ञको ग्रन्थो मयाऽऽमूलचूलमवालोकि। अस्मिन् ग्रन्थे प्राणिनस्तदीयवर्तमानशरीरपर्यन्तमेवावस्थानं प्रतिषिध्यानाद्यनन्तत्व-प्रतिष्ठापनपूर्वकं विभिन्नयोनीनां शरीरेषु स्वकीयपूर्वार्जितादृष्टवशाद् विजा-तीयसंयोगलक्षणं कर्मफलभोगौपयिकं जन्म भवतीति तर्कप्रमाणबलेन प्रतिष्ठा-पितम्। एष विषयः प्रायः सर्वेष्वास्तिकदर्शनेषु प्रतिपादितः। येषु कर्म-फलानिवार्यतावादितयाऽऽस्तिकत्वेनाभ्युपगम्यमानानां जैनबौद्धादीनामपि दर्शनानि समाविशन्ति। अधुना बहोः कालादुच्छृङ्खलविचाराणामुत्तरोत्तरं वर्धमानतया वैज्ञानिक्या दृष्टेः सार्वलौकिकमान्यतायाः समेधमानतया च पुनर्जन्मन्यधुनातनस्य लोकस्यानादरभावना प्रत्यहं प्रसारमश्नुवाना दृश्यते। पुनर्जन्मप्रतीपा दृष्टिरेव यद्यप्यापाततः परमरमणीया प्रतीयते, यतो हि पुनर्जन्मनः स्वीकारे भविष्यतो जीवनस्य सुखमयत्वसंपिपादयिषया वर्तमान-जीवनमुपेक्षितमिव जायते। किञ्च भविष्यति कालेऽपि त्रुटिमार्जनावसरस्य प्राप्त्याशया वर्तमाने जन्मनि प्रतिषिद्धान्यपि कर्माणि मनुष्यैस्तात्कालिकसुख-सौविध्याय क्रियमाणतामापद्यन्ते। यदि चाग्रे पुनर्जन्म नोपेयते तदा मनुष्यस्य मनसि विचारोऽयं बलादुत्पद्यते यत्तस्य यतो वर्तमानशरीरान्तमेवास्तित्व-मस्ति, अतो भविष्यत्यवसरासम्भवेन वर्तमाने जन्मन्येव तादृशानि लोकहि-तावहान्यवदातानि कर्माणि तेनानुष्ठेयानि, येन मरणानन्तरमितिहासे तदीयं सम्मानपूर्णं स्थानं सुरक्षितं भवेत्।

परं सूक्ष्मेक्षिकया विचारे वितन्यमाने पुनर्जन्मानभ्युपगमः समुचितो न प्रतिभाति। तस्यास्ति कारणद्वयम्—आद्यमिदं यन्मनुष्यस्य वर्तमानं जन्मैव न प्राथमिकं किन्तु पुनर्जन्मरूपं यदीदं जन्माऽऽद्यं जन्म भवेत् तदा सद्यो-जातस्य शिशोः स्तन्यपानादौ प्रवृत्तिर्न जायेत। प्रवृत्तिं प्रत्यैकमत्येन सर्वैरेव

विचारकैरिष्टसाधनताज्ञानस्य हेतुत्वोपगमात् स्तन्यपानादाविष्टसाधनताज्ञानस्य च वर्तमानजन्मनि जायमानाया उक्तप्रवृत्तेः पूर्वं दुर्घटत्वात्। हेतुताया अन्वयव्यतिरेकाभ्यामेव निश्चेतव्यतया तयोर्वर्तमाने जन्मन्यभावात्। अतो नूनमेवेदमभ्युपेयं यद् वर्तमानं जन्म पूर्वजन्मपूर्वकम्। एवमभ्युपगमे पूर्वजन्मनि जातेनानुभवेन अर्जितस्य स्तन्यपानादाविष्टमाधनतासंस्कारस्य जीवनादृष्टमहिम्नोद्बोधेन सद्योजातस्य शिशोरिष्टसाधनतायाः स्मरणस्य निर्बाधतया ततः स्तन्यपानादौ तत्प्रवृत्तेरुपपत्तेः।

द्वितीयं कारणमिदमस्ति यन्मनुष्यो यदि वर्तमानशरीरानन्तरमात्मनः शरीरान्तरासम्बन्धात्मकं जन्मान्तराभावं विश्वसेत् तदा निसर्गादेव तस्यैष विचारः प्रसेरद् यद् यदि भविष्यति न सम्भवति तस्य कोऽपि भोगावसरस्तदा वर्तमानो देहो यावदनुवर्तते तावदेव येन केनापि प्रकारेण तादृशी भौतिकी समृद्धिः प्रतिष्ठा चार्जनीया, येनाजीवनं वैषयिकसुखं भुञ्जानो लोकेनाभिनन्द्यमानोऽनुगम्यमानश्च स स्वसमकालिकैरनुभवितुं शक्येत। को नाम वर्तनानशरीरोत्तरं भविष्यन्त्याः स्वविपयकचर्चायाः स्वेनानवगन्तव्याया लोभेनात्मानं भौतिकाभ्युदयसाधनसंग्रहाद् वञ्चयेत्। अतः सुनिश्चितमिदं यत् पुनर्जन्मनोऽस्वीकारपक्षः समाजस्य लोकस्य स्वस्य च हिताय नोपकल्पते।

मनुष्यो जन्मान्तराभावे निश्चितमतिरेव नूनमीदृशं संघटनं निर्मिमीत, यद्द्वारा स्वात्मनस्तत्सदस्यानां च लाभाय तदतिरिक्तं लोकं तद्बलेनोत्पीडयेत्। फलतया मात्स्यन्यायस्य प्रवृद्ध्या सामाजिकी व्यवस्था विहन्येत, परस्पररागद्वेषानलज्वालावलीभिरालिङ्गितो निखिलो लोकश्चाकुलतां व्रजेत्। यथा च साम्प्रतं रूस-अमेरिकाप्रभृतिदेशानां नवनवसंहारकशस्त्राणां निर्माणप्रवृत्त्या प्रत्यक्षम्। स्पष्टमेव यत् तत्तद्देशेषु जन्मान्तरवादे आस्थाया अभावस्यैव सर्वोऽयं दुष्परिणामः।

अतोऽद्यत्वे चिन्तनशीलानां विद्वज्जनानामिदमावश्यकं कर्तव्यमापतितं यज्जन्मान्तरवादस्य प्रतिष्ठापनेन विश्वस्य जनतायामेष भावो दृढीक्रियेत, यद् येषां लोकविद्विष्टकर्मणां फलं वर्तमाने जन्मनि नासाद्यते, तानि जन्मान्तरे

नूनं तथा फलिष्यन्ति, यथा तदीयभाविजीवनस्य दुःखदुर्दिनग्रासोऽनिवार्यः। एतत्कर्तव्यदिशि श्रीत्रिपाठिमहोदयेन जन्मान्तरवादनाम्नो ग्रन्थस्य प्रणयनप्रयासो नितरामभिनन्दनीयः। अस्मिन् ग्रन्थेऽत्यन्तं निपुणतयेदं प्रादर्शि यज्जन्मान्तरं विश्वस्य प्रायः सर्वेषु शिष्टसमाजेषु येन केनापि रूपेणाङ्गीकृतमस्तीति।

जन्मान्तरसम्बन्धे वैदिकवाङ्मयस्य सौगतार्हतवाङ्मययोरनन्तरवर्तिसन्तभक्तप्रणीतग्रन्थानामनेकैरर्वाचीनैर्देशविदेशयोर्वैज्ञानिकै राजनीतिज्ञपुरुषैश्च यथावसरं प्रकटितानां विचाराणां च समाश्रयणेनातीवसरलया सुबोधया हृद्यया च संस्कृतभाषया प्रस्तुतं ग्रन्थं निर्माय जन्मान्तरवादस्तथा समर्थितो यथा न कोऽपि कुतार्किकोऽपि तदस्वीकारे सोत्साहो भवितुमर्हेत्।

आशासे, ग्रन्थोऽयं युगस्यावश्यकतामनुभवद्भिर्विपश्चिद्भिर्भारतीयसनातनसिद्धान्तजिज्ञासुभिश्च सबहुमानमध्येष्यतेऽभिनन्दयिष्यते च ग्रन्थकारः श्रीत्रिपाठी सप्रमोदम्।

**बदरीनाथशुक्लः**
भू० पू० कुलपतिः
संपूर्णानन्द संस्कृत-विश्वविद्यालयस्य
वाराणसी

कार्तिकपूर्णिमा,
२०४२ वि० सं०

शुभाशीर्वादाः—

## अनन्तश्रीविभूषितानां श्रीदक्षिणामूर्तिपीठाधीश्वराचार्यवर्याणां महामण्डलेश्वरश्रीमहेशानन्दगिरिमहाराजानाम्—

स्थानम्—श्रीदक्षिणामूर्तिपीठम्, वाराणसी

मार्गकृष्ण प्रतिपदा

२०४२ वि० सं०

वर्तमाने जगति देवानां ह्रासोऽसुराणाञ्च वृद्धिर्दरीदृश्यते। यथा-कर्मराद्धान्ते निश्चयाभावोऽत्र हेतुरिति श्रीकेदारनाथत्रिपाठिमहोदया-नामभिप्रायः। विद्वद्धौरेयाः सकलशास्त्रनिष्णाता जन्मान्तरवादाख्येऽस्मिन् ग्रन्थे देशविदेशदर्शनप्रदर्शनेन कर्मणो जन्मान्तरे साफल्यम्बहु-युक्त्या साधयन्ति। भारतवर्षप्रसूताः सर्वे धर्मास्स्वीकुर्वन्ति जन्मान्तरवादमास्तिका वा नास्तिका वा चार्वाकादृते। मोहम्मदेनापि स्वीकृतोऽयं सिद्धान्तः। अस्मिन्नधिष्ठाने सर्वेषामैकमत्ये शान्तिस्नेह-सत्यादिधर्मप्रतिष्ठा सुकरा। प्रार्थये भगवन्तमुमारमणं ग्रन्थरत्नस्यास्य भूरिप्रचारणम्। केदारनाथमहापण्डिता विरचयन्तु बहून् ग्रन्थानेतादृशान्, चिरंजीवन्त्विति चोमामहेश्वरं सम्प्रार्थये।

भगवत्पादीयो

**महेशानन्दगिरिः**

विदुषां सम्मतयः—

**शिक्षामन्त्रालये भू० पू० संस्कृतशिक्षापरामर्शदातॄणां साम्प्रतं वाराणसेय सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये कुलपतिपदं विभूषयतां डा० श्रीरामकरणशर्ममहाभागानाम्—**

दिनांक—२१ नवम्बर, ८५

नैवेद्यम्

पण्डितप्रकाण्डैः श्रीकेदारनाथत्रिपाठिमहोदयैः प्रणीतः प्रेरणाप्रदो "जन्मान्तरवादः" प्रसभं मनो हरति विपश्चिताम्। वस्तुतोऽयं ग्रन्थः प्रस्तौति "सार्वभौमदर्शनम्"। वेदेषु, उपनिषत्सु, विभिन्नेष्वास्तिकनास्तिकदर्शनेषु, सम्प्रदायेषु च विविधेषु जन्मान्तरवादसत्तां सम्यक् प्रतिपाद्य महदुपकृतं विपश्चितां जिज्ञासूनां ग्रन्थकारतल्लजैरित्यत्र नास्ति संशीतिलेशोऽपि।

आशास्महे, सुधियोऽन्तेवासिनश्च जिज्ञासवोऽभिनन्दिष्यन्ति ग्रन्थरत्नमिदमिति।

रामकरण शर्मा

**विद्यावाचस्पति-पद्मश्री-पण्डितराज-श्रीपट्टाभिरामशास्त्रि-महानुभावानाम्—**

श्रीः

पण्डितप्रवरैः श्रीकेदारनाथत्रिपाठिभिः प्रणीतं जन्मान्तरवादं [ सार्वभौमदर्शनं ] समग्रं समधीत्य प्रसीदति मे हृदयम्। अत्र जन्मान्तरवादमधिकृत्य पण्डितवरैर्विचारः कृतः। आस्तिकदार्शनिकैः जन्मान्तरं स्वीक्रियत इति विषये न कोऽपि सन्दिग्धः। नास्तिकदर्शनेष्वपि तत्तद्दर्शनप्रवर्तकैर्जन्मान्तरं व्यवस्थापितमिति सप्रमाणनिर्देशं निरूपितमस्मिन् ग्रन्थे प्रणेतृभिः। न केवलं नास्तिकदर्शनेषु किन्तु मोहमदखैस्तवादिमतान्तरेष्वपि जन्मान्तरमस्तीति तदीयप्रमाणनिर्देशपुरस्सरं प्रदर्शितमिति त्रिपाठिमहोदयानां परिश्रमं ग्रन्थोऽयमभिव्यनक्ति। ये च भौतिकविज्ञानधारायां प्रवहन्त्याधुनिकास्तैरवश्यमध्येयोऽयं ग्रन्थः, येन तेषामपि विश्वासस्समुदियाज्जन्मान्तरास्तित्वे। ग्रन्थस्यास्य सर्वत्र प्रचारं हृदयेन कामयतेऽयं जनः।

पट्टाभिरामशास्त्री
3–11–85

## प्राच्यप्रतीच्योभयभाषाविद्याविदाचार्यप्रवराणां डा० श्रीविद्यानिवासमिश्रमहाभागानाम्—

# प्ररोचना

सुधीवर्यैः श्रीकेदारनाथत्रिपाठिमहाभागै रचितो जन्मान्तरवादः सम्यगवालोकि। एष ग्रन्थः पौरस्त्यानां पाश्चात्यानां च तत्त्वचिन्तकानां जन्मान्तरसमर्थकवाक्यानां केवलमाकलनमेव न, अपितु समीचीनोपपत्तिपुरस्सरं जन्मान्तरसिद्धान्तस्य प्रतिष्ठापकोऽप्यस्ति। वस्तुतो जीवनात्परमपि जीवनमेव, जीवनस्य प्रवाहधर्मितया, देहस्य घटरूपेण स्थितत्वया च, चैतन्यस्य समभिव्यापकतया च, तस्मात् कुतो हि देहभङ्गे जीवनोपरमस्य प्रसङ्गः। तर्केणापि नवेन वैज्ञानिकशोधेन चेदमेवाभ्युपैति यत् समग्रं जीवनमेकमेव परस्परमनुस्यूततया, परस्परमोतप्रोततया, परस्परं साकांक्षतया, परस्परमापूरकतया च व्यवस्थितमविच्छिन्नं निरन्तरं सन्तानवाहि, तस्माद् देहनाशे केवलमावरणं नश्यति न तत्त्वम्, देहस्यापि मृदादिसकलं पञ्चधा विभक्तमुपादानं न सर्वथा नश्यति, केवलं प्रकृतिरूपावस्थितिमेव भजते। अर्वाचीनैर्भौतिकीविद्याविद्भिर्जीवविज्ञानविद्भिश्च इदमेव सत्यं विविधेभ्यः प्रयोगेभ्यः समसाधि यद् द्रव्योर्जयोः ( Matter and energy ) परस्परं विनिमयो निरन्तरं संपद्यमानो दरीदृश्यते। द्रव्यस्य चेयत्ता तस्माद् हेतोः सकलतया ग्रहीतुं न पार्यते। भारतीयैर्विचारकैः स्वान्तः स्फूर्त्तेन चैतन्येनैतद् अद्वैतं समदर्शि विविधाभियुँक्तिभिश्च प्रत्युपापादि। जन्मान्तरोपपादकं प्रथमं श्रुतिगतं प्रमाणमथर्ववेदस्य नवमकाण्डे दशमे सूक्ते लभ्यते। तद्यथा—

अपाङ प्राङेति स्वधया गृभीतो मर्त्योऽमर्त्येना: सयोनिः।
ताश्वश्वन्ता विषूचीना वियन्तान्यन्यं चिक्युर्नहि चिक्युरन्यम्॥

अस्यायमभिप्रायः—अमरणधर्मा जीवो मरणधर्मणा शरीरेण एकसूत्रेण आबध्यते, तत्सूत्रमहङ्कारः। उभौ जीवशरीरौ परस्परेण संयुतौ सञ्चरतः परस्पराद् वियुतौ च पुरतः पृष्ठतो वा सञ्चरतः स्वभावं स्वधां स्वलक्षणं चानुसन्धत्तः। यदा मर्त्यो जीवः पुरो भवति तदा गतिरपि अग्रेसरा, देवयानपरा आस्ते, यदा च मर्त्यं शरीरं पुरो भवति तदा हि गतिः पश्चात्पदा सञ्जायते। वस्तुतो मरणधर्मं शरीरं स्थूलरूपेण मृतमपि जीवेनामर्त्येना

हन्तासूत्रबद्धतया सूक्ष्मरूपेण कर्मवासनासम्पिण्डलिङ्गरूपेण सङ्क्राम्यत्येव। अनेन लिङ्गशरीरेणावद्धो जीवो दिक्षु दिक्षु आहिण्डमानः पूर्ववासनावशादात्मीयभूतानि पुत्रादिसंवन्धिशरीराणि परिचिनोति, किन्तु न तथा विशदतयास्या आत्मीयताया निबन्धनमात्मानं परिचिनोतीति।

अस्मिन् मन्त्रे वीजरूपेण न केवलं जन्मान्तरवादस्य प्रतिष्ठापना कृता, आत्मतत्त्वानुशीलनस्यापि वीजमुप्तम्। जन्मान्तरवादे कैश्चन जन्मान्तराधिगतसुखदुःखादिपरिणामनियततया कर्मणः प्रयोजनमेव मोघायत इत्याशङ्क्यते, तन्नोपपत्तिमद्, यतो हि कर्मणां परिपाकः न सिद्धो नियतो वा, कर्मणां प्रारब्धं सञ्चितं क्रियमाणं चेति त्रिरूपत्वात् तत्र केवलं प्रारब्धस्य फलमुखत्वादन्येषां फलमुखत्वस्य स्वसङ्कल्पपूर्वकसमारम्भवश्यत्वाच्च जीवस्य कर्मविषये स्वाधीनत्वाच्च। मन्ये, सम्प्रत्येतावदिति निश्चितं मन्यमानप्राये शिक्षिते जगति जन्मान्तरवादस्य विषये अनेका अन्याश्च विप्रतिपत्तयस्तासामपाकरणं लघुनानेन लेखेन कर्तुं न शक्यते, दिङ्मात्रमेव न्यवेदि त्रिपाठिमहाभागानां रचनोत्कर्षप्रणोदितेनानेनाज्ञजनेन। परामनोविज्ञानविद्भिः पाश्चात्यैर्विद्वद्भिः पूर्वजन्मस्मृतिमज्जनानां समग्रव्यवहारस्यानुशीलनं कृत्वाऽद्यापि न निश्चायकः कोऽपि निष्कर्ष आपादि, परं नूनमेवैभिः प्रयत्नैर्जन्मान्तरसङ्क्रमितवासनोपचयसम्भावना उदबोधि, सा च सम्भावना भूयोभूयो नूतनानि पुनरन्वेषणानि समाह्वयति।

अस्य जन्मान्तरवादस्य प्रणेतारः सुतरां सभाजनार्हास्तेऽनेन ग्रन्थेनानेकानि विचिकित्साद्वाराणि जीवनतत्त्वविवेचनस्य जीवनैक्यप्रत्यभिज्ञानस्य च व्यवारिषुरिति।

काश्यां, कार्तिक शु० ५ तिथौ
२०४२ वि० वत्सरे

विदुषां वशंवदो
विद्यानिवासमिश्रः

## * ग्रन्थप्रणेतुर्वंशप्रशस्तिः *

अभूत् सरय्वाः किल तीरभूद्भवो द्विजो भरद्वाजमुनेर्हि वंशजः।
तिवायु'पाधिः खलु विश्रुतो भुवि, स चित्रसेनो हि महायशा बुधः ॥ १ ॥

स 'साहबाख्यं, ह्यु्दपीपदत् सुतं, वंशाग्रगण्यं महनीयकीर्तिकम्।
स्वनामयाथार्थ्यमलम्भि तेन वैं, विभिन्नवर्गीयजनादृतेन च ॥ २ ॥

तस्य त्वभूवन् किल पञ्च सूनवः, समेऽपि भूत्यादिगुणान्विता वभुः।
तेषामभूदिद्वयशाः सुविश्रुतो रामेश्वरोऽग्रचः समुदारमानसः ॥ ३ ॥
रामेश्वरस्यापि सुतेषु 'सुन्दरा' गर्भोद्भवाः षड् रघुनन्दनात् सुताः।
सर्वादिनारायण आदिमःसुतो द्विपूरणो रामविहारिसंज्ञकः ॥ ४ ॥
श्यामादिरन्यो हि विहारिनामभागभूत् तृतीयस्तु सुतो महावलः।
स तीर्थराजो जनितश्चतुर्थकः प्रयागराजोऽपि च पञ्चमोऽभवत् ॥ ५ ॥
विन्ध्याचलस्सर्वकनिष्ठकोऽभवत् सुतः स षष्ठो मतिमानमीषु च—
विहाय तुर्यं सकला हि पौत्रिणोऽभवन् प्रसादाज्जगदीश्वरस्य वै ॥ ६ ॥
त्रिपाठिनो रामविहारिणस्ततः सुतौ जिलेबाशुभगर्भसम्भवौ।
केदारनाथोऽहमिहादिमः सुतः श्रीद्वारकानाथ इतीतरोऽस्ति च ॥ ७ ॥

गङ्गादेव्युद्भवौ पुत्रौ, वीरेन्द्रो* मेऽग्रिमस्तयोः।
विजयादिकुमाराख्यो द्वितीयो हि सुतोऽस्ति मे ॥ ८ ॥
मोदः शान्तश्च फुल्लश्च प्राद्या आद्यस्य सत्सुताः।
प्रवर्धन्तामिमे नित्यं देवपितृप्रसादतः ॥ ९ ॥
ममानुजस्य द्वौ पुत्रौ 'जयन्ती' कुक्षिसम्भवौ।
वीरेशोऽथ व्रजेशश्च वर्धेतामीशरक्षितौ ॥ १० ॥
विहारराज्ये सारण्य (सारन) मण्डले पुण्यनामनि—।
ग्रामे विष्णुपुरे जातौ स्मरणीयाभिधानयोः— ॥ ११ ॥
तपः श्रद्धात्मनोः पित्रोः पुण्यादावां सहोदरौ।
कृपातोऽभूव वाग्देव्या वाप्तविद्योदयाविह ॥ १२ ॥
संस्कृते चाङ्गले विद्वान् विशिष्टोपाधिभूषितो-
ऽनुजः श्रीद्वारकानाथो राज्येऽभूत् सुप्रशासकः ॥ १३ ॥

---

* चन्द्रशेखर इत्यपि नामान्तरम्।

अहं च—

न्यायवैशेषिके शुक्लात् सूर्यनारायणाद् गुरोः ।
द्विवेदिनश्च वेदान्तं हरिहरकृपालुतो- ॥ १४ ॥
ऽधीत्यादौ मण्डले चम्पारण्ये राज्ये विहारके ।
बकुलादिहरे ख्याते महासंस्कृतसद्मनि- ॥ १५ ॥
दर्शनाऽध्यापकोऽभूवं प्राचार्यश्चापि कीर्तिमान् ।
ततस्तु भागलपुरे राजसंस्कृतसद्मनि- ॥ १६ ॥
व्याख्याता दर्शनेऽभूवं बह्वब्दान् राजपत्रितः, ।
ततः शम्भोः प्रसादात्तु काश्यां हिन्दुपदाश्रिते- ॥ १७ ॥
विश्वविद्यालये सांख्ययोगप्राध्यापको भवन् ।
विभागाध्यक्षतां चापि दर्शनस्य न्यभालयम् ॥ १८ ॥
प्रशासकाद्यः सेवातो विश्वविद्यालयस्य तु ।
[illegible] सद्यः 'शास्त्रचूडामणी' वृतः ॥ १९ ॥
हरिद्वारे स्थितस्तत्र वेदान्तं समपीपठम् ।
❀यू.जी.सी. योजनायां तु पुनः काशीमुपेयिवान् ॥ २० ॥
सांख्यशास्त्रे शोधकार्यं कुर्वन् वर्तेऽधुना पुनः ।
निर्देशे [illegible] संस्कृतं सेवयायहम् ॥ २१ ॥
यां न्यायबोधिनीं तर्कसंग्रहे पदकृत्यकम् ।
दीपिकां चापि तत्रैव कलाभिस्समटीकयत् ॥ २२ ॥
सांख्ययोगाश्रयोः कोशं प्राणीयां मौक्तिकं च यः ।
यो विज्ञानामृतं भाष्यं वेदान्ते समपीपदत् ॥ २३ ॥
आत्मतत्त्वविवेकाख्यो ग्रन्थो व्याख्यायि भाषया ।
लोकोपकारबुद्ध्यैव व्याख्ये येन, ततः परम् ॥ २४ ॥
जन्मान्तरादिवादाख्यः प्रणीतो देवभाषया ।
ग्रन्थोऽपि, तस्य कृतिभिः प्रीयतां मे सदाशिवः ॥ २५ ॥
नेत्राब्धिशून्यनयनैरङ्किते विक्रमाब्दके (२०४२) ।
शुक्लेऽनन्तचतुर्दश्यां कृता वंशप्रशस्तिका ॥ २६ ॥

——►◄——

❀ University grants Commission (विश्वविद्यालय-अनुदान-आयोग)

# विषय-सूची

भाविताः पूर्वदेहेषु, सततं शास्त्रबुद्धयः ।
भवन्ति सत्त्वभूयिष्ठाः, पूर्वजातिस्मरा नराः ॥

[ सुश्रुतः ]

ॐ

# जन्मान्तरवादः

[ सार्वभौमदर्शनम् ]

यस्मिन् ध्याते भवेत् सिद्धिर्गणनाथे गजानने।
सोऽनुगृह्णातु नस्तूर्णं बुद्धिराशिर्गुणालयः ॥१॥

प्राप्तोदयं स्थैर्यमुपैति लीयतेऽखिलं जगत् स्थावरजङ्गमात्मकम्।
यतो मुहु, र्बोधपरावधिर्नुतः शिवः स पायादशिवादनारतम् ॥२॥

शास्त्राणि स्माञ्जसा भान्ति भास्वतो यस्य सत्तया।
सूर्यनारायणं शुक्लं गुरुं तं नौमि विश्रुतम् ॥३॥

उपेत्य वेदान्तमधीतवान् पुनर्द्विवेदिनं यं शिवविष्णुरूपिणम्।
गुरुं कृपालुं विदितं हरिहरं तमप्यभोद्धं भृशमानतोऽस्म्यहम् ॥४॥

## उद्देशः

छान्दोग्योपनिषदः षष्ठाध्यायस्य प्रथमखण्डे एकः प्रसङ्ग आयाति। तत्रोल्लिखितम्—अरुणापुत्रेणोद्दालकेन निजात्मजः श्वेतकेतुर्ब्रह्मचर्यपूर्वकं वेदाध्ययनाय समादिष्टः। यतो हि तस्य कुले कोऽपि जनो वेदाध्ययनविरहितो नाभवत्, अतः श्वेतकेतुरपि पितुराज्ञां शिरसि धारयन् द्वादशवर्षायुष्को गुरुकुलं जगाम। तत्र चायुषश्चतुर्विंशतिवर्षाणि यावच्चतुर्णामपि वेदानामध्ययनं परिसमाप्यासौ स्वगृहं परावर्तिष्ट। तेनाध्ययनेन श्वेतकेतोः स्वसर्वज्ञताया अभिमान इवाभवत्। एतदालोक्य तत्पितोद्दालकः श्वेतकेतुं पुत्रं पृष्टवान्—"उत तमादेशमप्राक्षीः? येनाश्रुतं श्रुतं भवति, अमतं मतम्, अविज्ञातं विज्ञातमिति?"।

अर्थात् किं त्वया स उपदेशो गृहीतः? यस्मिन् सति पूर्वं कदाचिदश्रुतमपि श्रुतं सम्पद्यते, अकृतमननमपि तत्त्वं कृतमननमिव जायते, अथवा सर्वथा-

ऽज्ञातमपि ज्ञातं सम्पद्यत इति। उक्तप्रश्नस्योत्तराभिधाने स्वासामर्थ्यमभिव्यञ्जयति श्वेतकेतौ स्वयमुद्दालक एवानेकोदाहरणैः स्वपुत्रं श्वेतकेतुं तदात्मतत्त्वं व्यज्ञापयद्, येन ज्ञातेनैव सर्वं श्रुतं मतं विज्ञातं च सम्पद्यते।

इत्थमेव पुनर्जन्मवादो जन्मान्तरवादो वा दार्शनिकानां स केन्द्रीभूतसिद्धान्तो वरीवर्ति, यस्मिन्नवगते सति न केवलमाध्यात्मिकसिद्धान्तानामेव, प्रत्युताधिभौतिकानामाधिदैविकानाञ्च पुरातनाभिनवानां सर्वेषां वादानां रहस्यानि स्वत एव समुद्घाटितानि सम्पद्यन्तेतमाम्। एतद् ह्युपरिष्टात् स्पष्टीकरिष्यते। एतदेव चास्य ग्रन्थसमारम्भस्य प्रधानमुद्देश्यमास्ते।



## लक्षणम्

मृत्यूपरान्तमात्मना सह शरीरेन्द्रियप्राणमनसामेकत्र यः पुनः संयोगः, स पुनर्जन्मेत्याख्यायते। अर्थादीदृशः संयोग एव जन्म, तथेदृशसंयोगस्य नाशो वा उक्तवस्तूनां पारस्परिको विभाग एव वा मरणमस्तीति। "पुनर्जन्मे" ति शब्दे 'पुनः' शब्द एतत्सूचनाय विद्यते यज्जन्ममृत्य्वोरियं परम्पराऽनादिकालादायातीति। इमां जन्ममृत्युपरम्परामेव शास्त्रकाराः 'संसार' शब्देन व्यवाहार्षुः। न्यायदर्शने महर्षिगौतमस्य "पुनरुत्पत्तिः प्रेत्यभावः" (१।१।२९) इति सूत्रं वैशेषिके कणादमहर्षेश्च "तत्संयोगो विभागः" (६।२।१५) इति सूत्रमपि चाद एव लक्षणं पुनर्जन्मनः सूचयतः।

उपर्युक्तात् पुनर्जन्मलक्षणाद् भ्रान्तिरियमपैति यद् देहेन्द्रियादिभौतिकतत्त्वैः सहैव चेतनतत्त्वमपि स्वतो जायत इति। तथेयमाशङ्कापि नावतिष्ठते यद् आत्मनो नित्यपदार्थत्वपक्षे उत्पत्तिरूपं तज्जन्म नाशरूपस्तन्मृत्युर्वा कथं संभाव्यत इति। यतो हि वैदिकदर्शनेषु आत्मा नित्यः सर्वव्यापकश्चास्ति। तथा नित्यसता तेनात्मना सह शरीरेन्द्रियादिनूतनभौतिकतत्त्वानां संसर्ग एवोत्पद्यते नश्यति चेति। इयं स्थितिरेव जन्म मृत्युर्वोच्यते।

यथा हि विद्युच्छक्तिः सर्वत्र वर्तमाना भवति, किन्तु उपकरणविशेषमासाद्य क्वचित् कदाचिदभिव्यज्यते तथा तथाविधोपकरणविशेषापाये तिरोधीयते, तद्वत्। दीपशलाकायां काष्ठे वा पूर्वतोऽग्निर्वर्तते घर्षणद्वारा च प्रकटो भवति। एवमेव शरीरेन्द्रियप्राणात्मकानां भौतिकतत्त्वानां संसर्गात् पूर्वतो

वर्तमानात्मनि चैतन्यमभिव्यज्यते, तथा विकीर्णेषु तेषु भौतिकतत्त्वेषु तदीय-चैतन्यं तिरोहितं भवति। अग्रिमे प्रकरणे चेदमधिकं स्पष्टं भविष्यति।



# परीक्षा

नेह सन्देहलेशोऽपि यत् प्राचीनैर्महर्षिभिर्दर्शनेषु ये केऽपि सिद्धान्ताः प्रतिपादितास्ते न केवलं तेषामाज्ञामात्रम्, प्रत्युत प्रमाणैः परीक्ष्य ते दर्शिताः। अतस्ते कपोलकल्पनामात्रप्रसूता इति कृत्वा नोपेक्षितुं शक्यन्ते। "प्रमेयसिद्धिः प्रमाणाद्धि" इति ह्यासीत् तेषां समुद्घोषः। एतद् हि ते स्वयं निकाममनुभवन्ति स्म यदप्रामाणिकान् सिद्धान्तान् प्रतिपादयतामुक्तय इव तदुक्तयः समाजे समुपेक्षिताः स्युरिति। अतः कस्यापि सिद्धान्तस्य स्थिरीकरणात् पूर्वं प्रत्यक्षानुमानादिप्रमाणनिकषेषु तस्य पूर्णपरीक्षणं करणीयमिति।



## प्रमाणानि तेषामुपयोगश्च

न्यायदर्शनानुसारेण प्रमाणानि चत्वारि भवन्ति—प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दश्चेति। यद् वस्तु इन्द्रियसम्बद्धं भवति, तस्य ज्ञानं प्रत्यक्षप्रमाणेन भवति। हेतुमालोक्य अप्रत्यक्षस्य साध्यस्य ज्ञानमनुमानप्रमाणेन भवति। यथा–धूमं दृष्ट्वाऽग्नेरनुमानं जायते, यथा वा जगति जन्यपदार्थान् दृष्ट्वा तत्स्रष्टुरीश्वरस्य सर्वज्ञस्यानुमानं जायते।

यो हि जनो गवयशब्दं जानाति, किन्तु गवयं कदाचिदपि दृष्टवान्नास्ति, स कुतश्चिद् वनवासिन इदं ज्ञात्वा यद् 'गोसदृशो गवयो भवति' वनं गतो गोसदृशं पिण्डविशेषं दृष्ट्वा जानाति 'अयं गवय' इति। इदं ज्ञानमुपमानप्रमाणाद् भवति। यस्य कस्यचिदाप्तपुरुषस्य वचनादज्ञातवस्तूनां यद् ज्ञानं भवति, तत् शब्दप्रमाणस्य कार्यमस्ति।

मीमांसा-वेदान्तदर्शनयोरर्थापत्तिरनुपलब्धिश्चेति प्रमाणद्वयमधिकं स्वीकृतमस्ति। पौराणिकाः संभवमैतिह्यं चापि स्वीकृत्य प्रमाणानां संख्या अष्टौ इति प्रतिपादयन्ति। नैयायिकास्तु अर्थापत्तिसंभवौ अनुमाने, अनुपलब्धिं

प्रत्यक्षे, ऐतिह्यं च शब्दे गतार्थयन्तश्चत्वार्येव प्रमाणानि स्थिरीकृतवन्तः । सांख्या योगाश्च हि नैयायिकाभिमतमुपमानप्रमाणमनुमानेऽन्तर्भाव्य प्रत्यक्षानुमानागमान् त्रीण्येव प्रमाणानि मन्यन्ते। वैशेषिकमतावलम्बिनस्तु शब्दतो जायमानमर्थबोधमनुमितावेवान्तर्भाव्य द्वावेव प्रमाणभेदावङ्गीकुर्वन्ति प्रत्यक्षमनुमानञ्चेति । उक्तेषु विभिन्नमतेषु प्रमाणानां वर्गीकरणं कामं पृथक्-पृथग् भवेत्, तथापि वस्तुस्थितिषु तेषां पार्थक्यं नायाति। चार्वाकास्तु केवलं प्रत्यक्षमेवैकं प्रमाणमभ्युपयन्तो जगति निजां स्वाभाविकीं भौतिकतामेव प्रदर्शितवन्तः ।

उपरि प्रतिपादितेषु प्रमाणेषु व्यावहारिकोपयोगित्वदृष्ट्या प्रत्यक्षानुमानशब्दप्रमाणान्येव विशेषतो महत्त्वपूर्णानि सन्ति । अतोऽस्मिन् जन्मान्तरवादप्रसङ्गे एतेषामेव त्रयाणां चर्चा करिष्यते ।

प्रमाणैरेव कस्यापि वस्तुनो निर्णयः शक्यते कर्तुम् । परमिदं सर्वथैव ध्यातव्यमस्ति यत् कस्यचिदपि वस्तुनः सिद्धौ सर्वेषामेव प्रमाणानामेकत्राभिसंप्लवो नानिवार्यः । प्रत्यक्षप्रमाणाप्राप्तौ अनुमानेन शब्देन वा प्रमाणेन तत् साधयितुमर्हम् । तस्य प्रत्यक्षतो ज्ञातुमशक्यत्वे नैवं वक्तुं शक्यते यत् तद् वस्त्वेव नास्तीति । तत्र कारणम्, प्रत्यक्षप्रमाणस्य प्राप्तिः सर्वत्र न भवितुमर्हति । किं दिवा नभसि अदृश्यमानास्तारका न सन्ति ? स्थालीप्रमाणो दृश्यमानः सूर्यः किं पृथिवीतस्त्रयोदशलक्षगुणिताधिकप्रमाणो न भवति ? किं वा केनापि पाण्डुरोगिणा पुरुषेण पीततया दृश्यमानानि सर्वाणि वस्तूनि पाण्डून्येव भवन्ति ? अथवा कस्यापि मनसोऽन्यत्र संलग्नतादशायां संमुखतोऽपि व्रजन् जनो यदि नो ज्ञायेत तदा तस्य ततो गमनमेव मिथ्याऽस्ति ? यदि वा निजलोचनस्थमप्यञ्जनमतिसन्निहिततया कश्चिन्न पश्येत्तदा तदञ्जनमेवास्तित्वतो हीयेत ? तथा दर्पणस्थान्मुखप्रतिबिम्बादनुमाय सज्जनविशेषवचनाद्वा जानीयात् तदा साऽञ्जनप्रतीतिर्भ्रान्ता भवेत् ?

कस्यां कस्यां स्थितौ वस्तुनिर्णये प्रत्यक्षप्रमाणमयोग्यं भवति, ताः सर्वाः स्थितयः ईश्वरकृष्णेन सांख्यकारिकायां संगृहीताः सन्ति । यथा—

**अतिदूरात् सामीप्यात् इन्द्रियघातान्मनोऽनवस्थानात् ।**
**सौक्ष्म्यात् तद्व्यवधानादभिभवात् समानाभिहाराच्च** ॥ [सां.का. ७]

अर्थाद् वस्तुनोऽतिदूरस्थतायामतिसामीप्ये, इन्द्रियेषु रोगादिना दूषितेषु सत्सु, मनसोऽस्थिरत्वे, वस्तुनः सूक्ष्मतायां, भित्त्यादितो व्यवधानसम्पादनात्, दिवा

भास्करात् ताराणामिव वस्तुनः कस्माच्चित्तेजस्विपदार्थात् तिरोधानप्राप्तेः, वारिदसमुद्रजलयोरिव समानाकारवस्तुनोः परस्परमिश्रणाच्च प्रत्यक्षद्वारा वस्तुनिर्णयो न भवितुं शक्नोति, यद्यपि तद् वस्तु विद्यतेऽवश्यम् ।



## प्रत्यक्षस्येवानुमानशब्दयोरप्यनिवार्यत्वम्

उपर्युक्तैर्निदर्शनैः पाठकानां विदितमभूद् यद् वस्तुनिर्णये प्रत्यक्षप्रमाणासामर्थ्येऽनुमानस्य शब्दस्य च साहाय्यमावश्यकं भवति । एवं सत्यपि केवलप्रत्यक्षप्रमाणवादिनोऽनुमानात् शब्दादपि च प्रमाणात् सिद्धं पुनर्जन्मसिद्धान्तं न मन्तुमीहन्ते । तान् वयं पृच्छामः—कथं तेषां कतिपयदिवसकृते गृहात् सुदूरदेशप्रवासदशायां तदीयपत्न्यस्तान् पतीन् प्रत्यक्षतोऽनुपलभ्य मृतानिवासतोऽवधार्य सोरस्ताडं न रुदन्ति ? प्रत्युतैकस्माल्लघुपत्रादेव तत्प्रहिताद् विकसिताननना जायन्ते । किं च, ते एतत् प्रत्याययितुं शक्नुवन्ति यद् यं ते स्वपितरं जानन्ति स एव तेषां पितास्तीति । नूनमस्योत्तरं निषेधात्मकमेव भवेत् । अत्र तैर्निजमातुर्वचन एव विश्वासः करणीयतामापद्यते । अतः केवलं प्रत्यक्षमेव प्रमाणत्वेनोपयद्भिर्नव्यैः प्राच्यैश्च चार्वाकैरपि अनुमानप्रमाणहस्तावलम्बो ग्रहणीय एव भवति, तथा श्रुतिमातुर्वचनेषु विश्वासः करणीय एव भविष्यति । एतद्विना गत्यन्तरं नास्ति । तैरिदं सदा ध्यातव्यं भविष्यति यन्माता स्वपुत्रेण सह च्छलपूर्णव्यवहारं नैवाचरतीति । अतएव हि स्वमातुर्वाक्यं सर्वस्यापि पुत्रस्य कृते विश्वसनीयं भवत्येव ।

एवमेव श्रुतीनामुपदेशो विश्वमात्रस्य कृते भवति, तथा स उपदेशः कस्यापि स्वार्थस्य वशीभावेन न प्रवर्तते, अतस्सः सर्वथा श्रद्धेय एवास्ति । लोके हि दृश्यते यत् स एव जनोऽसदुपदिशति, यस्य तथाकरणे नैजः स्वार्थो भवति । श्रुतयस्तु सर्वथा रागद्वेषादिरहिताः सन्ति । श्रुतीनां च मान्यत्वम् (अभ्यर्हितत्वम्) अग्रे पुनर्जन्मनि वैदिकप्रमाणोपस्थापनात् पूर्वं विशेषतः स्पष्टीकरिष्यते । तावदत्र युक्तिभिरेव पुनर्जन्म साधनीयमस्ति, यच्चानुमानमित्युच्यते ।



## चार्वाकः पुनर्जन्मवादश्च

अत्र पूर्वमिदमस्माभिर्विमर्शनीयं यद् वस्तुतः पुनर्जन्मसिद्धान्तः कथं नु चार्वाकैरुद्धूलितः ? नूनं तैर्विचारितं यत् पुनर्जन्मनो मान्यतादशायां कर्मणां

तत्फलानाञ्च बन्धनेषु पतितव्यं भवेत्, तथा निर्मर्यादं स्वच्छन्दतया विचरणं न संभवेदिति। अत आस्तिकानामिमं विचारं यत् 'पुनर्जन्मग्रहणात् सम्प्रति क्रियमाणानां कदाचाराणां फलं भोक्तव्यमेव भविष्यतीति' नागदन्तके संस्थाप्य आजीवनं यदेव मनसि भावयेत् तदुन्मुक्तमाचरेदिति चेत्ययमेव तेषामभिप्रायः। अधस्तादुद्धृताः श्लोकास्तेषां सिद्धान्तपरिचयाय पर्याप्ताः स्युः। यथा—

**न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।**

अर्थात् नास्ति कश्चित् स्वर्गोऽपवर्गो वा, नापि कश्चिदात्मा भवति, यस्य लोकान्तरेण सम्बन्धः सम्भाव्येतेति।

**यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः।**

अर्थात् निजसुखभोगार्थम् ऋणं तु गृह्णीयात् परं यावज्जीवनं तदपाकरण-चिन्तां न भावयेत्। मृते तु जाते कः पुनरायाति, य ऋणानामपाकरणप्रयुक्तां यातनामनुभवेदिति।

**अङ्गनालिङ्गनाजन्यं सुखमेव पुमर्थता।**
**कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते॥**

अर्थाद् युवतीनामालिङ्गनेन समुत्पन्न आनन्द एव पुरुषार्थस्तथा कण्ट-कादिभिश्छेदभेदजन्यं यद् दुःखजातं तदेव नरकपदाभिधेयं मन्तव्यमिति। नहि लौकिकाभ्यामानन्ददुःखाभ्यामतिरिक्ते स्वर्गनरके स्तस्तत्त्वतः। इदमेव चार्वाकाणां पुरुषार्थस्य सैद्धान्तिकं मानचित्रमास्ते।

यद्यप्युपर्युक्तानि चार्वाकमतनिदर्शनानि पद्यानि बहुपुरातनानि सन्ति, तथाप्यस्मिन् विंशकेऽपि शतके पाश्चात्यशिक्षादीक्षितानामाधुनिकचार्वाकाणां प्राचुर्यमस्ति, तेषामेव च संप्रति समाजे वाचां प्रचारोऽवलोक्यते। कथं नेदं संभवेदपि ? यतस्तेषां सिद्धान्त एवैतावान् रोचको वर्तते, यस्मिन् सर्वसाधा-रणानां रुचिः स्वाभाविकी जायते। यतो मानवसमाजेऽधिकांशजनानां मानसिकी स्थितिरतिनिम्नतरा भवति। कतिपयानामेव विरलानां मनांसि समुन्नतानि भवन्तीति। इदानीं जनानां ध्यानं जन्मतः समारभ्य मरण-पर्यन्तानां घटनाचक्राणां सीमस्वेवाबद्धं भवति। जन्मतः पूर्वतनस्य मरणात् पश्चात्तनस्य च विषयस्य विचारोऽपि समयस्य नैरर्थक्यसम्पादनं मन्यते तैश्चार्वाकधूर्तैः। इदमेव हि तेषां घोरनास्तिक्यमस्ति। अस्तु, प्रकृत-मनुसरामः।



## आत्मसम्बन्धिमतान्तराणां समीक्षा

चार्वाका ब्रुवते—देहे या चेतनचेष्टा दृश्यते, सा शरीराद् भिन्नेन केनाप्यात्माभिधानेन कारणेन न भवति, किन्तु पृथ्वीजलतेजोवायूनां तत्त्वानां विलक्षणसंयोगेनैव शरीरे चेतना समुपजायते। अनेकवस्तूनां मिश्रणेनाद्भुतायाः शक्तेः प्रादुर्भावो दृश्यतेऽपि प्रायो लोके। अतो देह एवायं चेतनात्मा मन्तव्यो न ततोऽतिरिक्तः कश्चित्। अयञ्च देहात्मा न जन्मनः पूर्वमासीत् न वा मृत्यूपरान्तं स्थास्यति। अतोऽस्यां स्थितौ कस्य पुनर्जन्म भवेत्। तस्मादयं देहात्मा नवनवः समुत्पद्यते, भस्मीभावानन्तरमेव चास्य समस्ताः क्रियाः समाप्यन्त इति।

एष्वेव नास्तिकेषु कतिपये इन्द्रियाण्येवऽत्मानमास्थिषत। ते वदन्ति—यावदिन्द्रियाणि निजनिजकार्याणि सम्पादयन्ति, तावदेव जीवनमस्ति। अत इन्द्रियाण्येवात्मास्ति, तथा नैषां पुनर्जन्मना सह कोऽपि सम्वन्धोऽस्ति।

एवं केषांचन मतानुसारेण मन एवात्मास्ति, तथा कश्चित् क्षणिकविज्ञानमेव 'आत्मेति' शब्देन प्रतिपादयति। एवम्प्रकारेणात्मसम्बन्धे नैकानि मतमतान्तराणि प्रचलितानि सन्ति। किन्तु येषां मते आत्मा नित्योऽभ्युपगम्यते, तेषां पुनर्जन्मसिद्धान्तोऽपि कैवल्याधिगमात् पूर्वमावश्यकत्वेन मान्यतामुपगतोऽस्ति। अतोऽनित्यशरीरादिकमेवात्मानमभ्युपगतवतां कृत एवायमस्ति वस्तुतो जन्मान्तरवादसाधनप्रयासः। अतस्तेषामात्मसम्बधिनो विचारा एव पूर्वमिह समीक्ष्यन्ते।



## तत्र मनआत्मवादखण्डनम्

अत्र मन आत्मा अस्मादेव कारणात् न प्रतिपादयितुं शक्यते, यतो मनः सुखदुःखयोरनुभावयितृ एकमन्तरिन्द्रियमस्ति। अर्थात् मनः सुखाद्यनुभवस्यैकं साधनमस्ति, येन तु सुखदुःखे अनुभूयेते तत्तु मनसोऽतिरिक्तं तत्त्वमस्ति, तदेव चात्मास्ति। तैः कामं मन एवात्मा कथ्यतां तथापि सुखदुःखयोराश्रय एकः, अन्यच्च तयोरनुभवसाधनमिति तत्त्वद्वयमङ्गीकरणीयमेव। एवं मनस आत्मत्वाङ्गीकारे आत्मधर्माणां सुखदुःखेच्छाद्वेषज्ञानानामपि आश्रयो मनः स्वीकरणीयमापद्येत। अस्यां दशायां स्वसुखादीनां प्रत्यक्षं स्वस्यैव न भवितुं शक्नुयात्। यतो मनसः परमाणुरूपतयाऽणुगतानां धर्माणां प्रत्यक्षमनुपपन्नं

स्यात्। अणुर्धर्मिणोऽप्रत्यक्षत्वेन तद्गतधर्माणां प्रत्यक्षं कथमपि न संभवि। यथा पृथिव्यादिपरमाणवः स्वयमप्रत्यक्षाः सन्तीति तद्गतानां रूपरसादिगुणानामपि नैव प्रत्यक्षं भवतीति। अतो मनस आत्मत्वाङ्गीकारो न कथमपि युक्त्या संगच्छत इति।



## इन्द्रियात्मवादखण्डनम्

इन्द्रियाण्यात्मेति कथनमपि तथैवासङ्गतं यथा मनसः शरीरस्य वाऽऽत्मत्वकथनम्। तत्रेदं कारणम्—इन्द्रियैरेव तु करणैः कर्तृसापेक्षैस्तेभ्योऽतिरिक्तस्य कर्तुरात्मनः सिद्धिर्भवति, अतस्तानि स्वयमात्मा भवितुं कथं शक्नुवन्ति? अत्रेदं तात्पर्यम्—चक्षुः, रसना, घ्राणं, श्रोत्रं त्वक् चेति पञ्च ज्ञानेन्द्रियाणि क्रमेण रूप-रस-गन्ध-शब्द-स्पर्शग्रहणसाधनानि (करणानि) सन्ति। ग्रहणं ज्ञानं, तच्चैका क्रियाऽस्ति, तथा कस्या अपि क्रियाया उत्पत्तौ करणस्यापेक्षा भवति। एवं, व्यवहारे इदमपि दृश्यते यत् क्रियाया यत् करणं भवति, तदप्यवश्यं केनापि चेतनेन कर्त्राऽधिष्ठितं (सञ्चालितं) भवति। यथा दारुच्छेदनमेका क्रिया, तस्याः क्रियायाः, साधनं परशुः, स च चेतनेन वर्धकिना सञ्चालितो दारु च्छिनत्ति न स्वतः। तथैव रूपालोकनं रसास्वादो गन्धघ्राणं शब्दश्रवणं शीतोष्णादिस्पर्शनं च क्रियाः सन्ति, चक्षुर्जिह्वा-घ्राणं-श्रोत्रं त्वक् च तासां क्रियाणां क्रमशः करणानि सन्ति। अत एतेषामपि कश्चिच्चेतनोऽधिष्ठाता नितरामावश्यकः। स एवात्माऽस्ति। अनया युक्त्या इन्द्रियाणां शासकस्तेभ्योऽतिरिक्त आत्मा सिध्यति।

इन्द्रियाण्येव चेतनात्मेति स्वीकारे दोषोऽपि दृश्यताम्। तथाहि—बाल्ये युवावस्थायां वा सर्वेन्द्रियाणि स्वस्थानि भवन्ति तथा विभिन्नप्रकाराणि वस्तूनि पश्यन्ति शृण्वन्ति। किन्तु यदा कुतोऽपि कारणवशाच्चक्षुःश्रोत्रे विकृते भवतो वृद्धावस्थायां मन्दे वा जायेते, तदा ते दर्शनश्रवणयोरसमर्थे भवतः। तथापि पूर्वदृष्टश्रुतवस्तूनां सम्यक्तया स्मरणं बोभवीति। यदि तु इन्द्रियाण्येवात्मा सन्तु तदा स्मरणमिदं नोपपद्यताम्। यतो हि दर्शनश्रवणकर्तृणी नेत्रश्रोत्रेन्द्रिये प्रणष्टे जाते। यद्युच्यताम्—चक्षुःश्रोत्रयोः प्रणाशेऽपि अवशिष्टेन्द्रियाण्येव दृष्टश्रुतवस्तुस्मरणं करिष्यन्तीति, तदपि नोचितम्, "नान्यदृष्टं स्मरत्यन्यः" इति नियमादन्येन्द्रियानुभूतस्य वस्तुनोऽन्येन्द्रियेण

स्मरणासंभवात्। अत एतत् सिध्यति यदेभ्य इन्द्रियेभ्योऽतिरिक्त एकश्चेतन आत्माऽस्ति यः सर्वेन्द्रियैर्दृष्टश्रुतादिवस्तूनां संस्कारं धारयति, संस्कारबलाच्च दूषितेष्वपीन्द्रियेषु सर्वं स्मरतीति।

एवमनुभूयते यत् कमप्यम्लं पदार्थं दृष्ट्वैव दन्तेषु जिह्वायां च जलं संभृतं जायते। अत्रेदं विचारणीयमस्ति यदम्लवस्तुभक्षणकाले यन्मुखे जलमायाति, तस्य तु कारणमस्ति जिह्वाऽम्लवस्तुसंयोगः। किन्तु संयोगं विनैव केवलमम्लवस्तुदर्शनादानने जलव्याप्ततायाः को हेतुः? अतोऽवश्यमत्रेन्द्रियेभ्योऽतिरिक्त आत्माऽङ्गीकरणीयो यो जिह्वायामम्लवस्त्वाधानमन्तरैव दृष्ट्वैव पूर्वास्वादितामम्लतां स्मृत्वा तदिच्छतीति मुखं जलपूरितं जायते। एवञ्च इन्द्रियातिरिक्तात्मन एवायं व्यापारकलाप इत्यकामेनापि मन्तव्यम्।

एवं यद् वस्तु वयं वामेन चक्षुषा पश्यामः, तदेव पश्चाद् निमीलितवामनयनाः केवलेन दक्षिणेन चक्षुषा दृष्ट्वा प्रत्यभिजानीमः "तदेवेदं वस्तु यद् वामनेत्रेण दृष्टमासीत्" इति। यदाऽन्यदृष्टं नान्यः स्मरतीत्यस्ति नियमस्तदा वामनेत्रदृष्टं वस्तु नेत्रान्तरं कथं प्रत्यभिज्ञातुं शक्नुयात्? इतोऽपि सिध्यति यद् देहेऽस्मिन्नस्ति इन्द्रियेभ्योऽतिरिक्त आत्मा यो वस्तुविशेषमनुभूय समये स्मरतीति।

अत्रेदं शङ्कितुं शक्यते यदुपर्युक्तं प्रमाणं तदा मान्यं स्याद् यदा वामदक्षिणभेदेन देहे नेत्रद्वयं भवेत्, परं नैतदस्ति। एकमेव चक्षुर्मध्ये नासिकाव्यवधानेन द्वयमिवाभाति। यथा एक एव तडागो मध्ये सेतुव्यवधानेन द्वयमिव प्रतीयते, तद्वत्। तस्मात् प्रकृतेऽपि द्रष्टृ चक्षुरन्यत् प्रत्यभिज्ञातृ च चक्षुरन्यत् इति नास्ति, किन्त्वेकमेवास्ति। अतः कुतोऽत्रात्मसिद्धेरवकाश इति।

किन्तूपर्युक्ताशङ्का नितरां निःसारास्ति। यतो हि यद्येकमेव चक्षुर्भवेत् तदा एकस्मिन् चक्षुषि स्फुटिते जनोऽन्धो जायेत न तु काणः। अथवा पूर्वापेक्षयाऽन्यैव दृष्टिर्भवेत्। न त्वेवं भवति, तस्मादुक्ततर्काधारेण इन्द्रियातिरिक्तात्मसिद्धौ न काप्यनुपपत्तिः।



## क्षणिकविज्ञानात्मवादखण्डनम्

क्षणिकविज्ञानात्मवादो बौद्धानामस्ति। ते कथयन्ति यत् क्षणिकविज्ञानमेवात्मास्ति, न तु तदतिरिक्तो नित्यः कश्चिदात्मपदार्थोऽस्ति। विज्ञानं हि

प्रतिक्षणं नश्वरमस्तीति विज्ञानरूप आत्मापि क्षणिक एवास्तीति। एतदीयात्मसम्बन्धे किमधिकमभिधीयताम्? एकस्मिन् दिवसे न जाने कियत्सहस्रमात्मानो जायन्ते नश्यन्ति चेति निश्चितं नास्ति। अस्यां परिस्थितौ वर्षाणां मासानां दिवसानां च कथा त्यज्यताम्, अद्यैव किञ्चित्क्षणपूर्वं यद् वस्तु समनुभूतं तस्येदानीमेव स्मरणं मा भूत्। यतो हि द्रष्टा आत्मा क्षणिकतया नष्टो जातः, यश्च स्मर्ताऽस्ति, स तु अन्य एव समुत्पन्न इति। "नान्यदृष्टं स्मरत्यन्यः" इति न्याय इहाप्यापतति। तस्मात् क्षणिकविज्ञानात्मवादिनः प्रत्यपि स एव प्रश्नो जागर्ति यत् स्वानुभूतपूर्वान् पदार्थान् भवन्तः कथं स्मरन्तीति। अतः क्षणिकविज्ञानमात्मेति वादोऽपि नितरामप्रामाणिक उपेक्षणीयश्चास्तीति।



## शरीरात्मवादखण्डनम्

अथायं शरीरात्मवादो विचारणीय। अतिस्थूलबुद्धय आपादमस्तकं यच्छरीरमस्ति, तदेवात्मेति मन्यन्ते। ते प्रथममिदं प्रष्टव्या यत् यदि शरीरमेवात्माऽस्ति तदा मृतदेहे कुतो न चैतन्यं तिष्ठति? कथं न मृतशरीरमपि जीवितवत् चलति वदति वा? तान् प्रति द्वितीयश्चायं प्रश्न उपतिष्ठते यत् शरीरस्य प्रत्येकमवयवा अविरलं नश्यन्ति अवयवान्तराणि चोत्पद्यन्ते। अत एव बाल्ये यच्छरीरमासीत् तद् युवावस्थायां न तिष्ठति। अस्यां स्थितौ देहस्यात्मत्वे बाल्ये यदनुभूतं, युवावस्थायां तन्न स्मर्येत। यतो हि अनुभवकर्ता देहो भिन्न आसीत्, स्मर्ता चेदानीन्तनो देहो भिन्नोऽस्ति।

अनयैव रीत्या तृतीयोऽयमाक्षेपोऽस्ति यत् तन्मते हिंसादिपापकर्मणां फलं येन भोक्तव्यं स तन्न भुञ्जीत। उदाहरणार्थं यदि केनापि मनुष्येण कस्यापि वधः कृतः, तदर्थं च न्यायमूर्तिना मृत्युदण्डो देयोऽस्ति, तदा स मृत्युदण्डः कस्य भविष्यति? शरीरावयवानां प्रतिक्षणपरिणामितया हिंसकं तु तच्छरीरमिदानीं नास्त्येव, यस्मै स दण्डो दीयेत। यदि तु तदनन्तराय निरपराधाय देहाय स मृत्युदण्डो दीयते चेत् न्यायकर्ता शूलारोपणविधाता वधिकजनो वाऽपरौ हिंसकौ सम्पद्येते। अस्यां दशायां तावपि प्राणदण्डभाजौ कर्तव्यौ केनाप्यपरेण न्यायाधीशेन। किन्तु तत्रापि सैव पूर्वोक्ताऽव्यवस्थाऽऽपततीति कृतनाशाकृताभ्यागमानवस्थादोषा आपतेयुः। तस्मात् शरीरस्य कर्मफलभोक्तृत्वस्वीकार आत्मत्वस्वीकारश्च नौचित्यमावहतः।

एवं व्यवहारे दृश्यते यत् कोऽपि संघातः कस्याप्यन्यस्योपभोगाय भवति, यथा शयनमासनं भोजनजलपानादिसामग्री वा सङ्घातरूपत्वात् स्वातिरिक्ताय देहाय भवति न तु स्वार्थाय भवति। अर्थात् न हि शय्या शय्यायै आसनमासनाय च भवति, किन्तु शय्या शयनकर्तृजनाय भवति, आसनञ्चोपवेशकाय जनाय भवतीति। तद्वदेव शरीरेन्द्रियबुद्धिप्राणानां सङ्घातरूपः पाञ्चभौतिको देहोऽपि न स्वस्मै किन्तु स्वातिरिक्तस्य कस्याप्यन्यस्योपभोगायैव वर्तते। स चान्य उपभोक्तैवात्मास्ति। आत्मा तु संघातरूपो नास्ति, किन्तु असंहृतपदार्थोऽस्ति, अत एव स परार्थो न भवति। अतः स न कस्यापि उपभोग्योऽस्ति प्रत्युत सर्वोपभोग्यानामुपभोक्ताऽस्ति। यतः संघात एव परोपभोगाय भवति, आत्मा तु निरवयवतयाऽसंघातरूपोऽस्ति।

यद्युच्येत 'असंघातरूपः कश्चिदात्मा पदार्थो नास्त्येव, अतः शरीरेन्द्रियादिसंघातोऽपि कस्यचित् संघातान्तरस्यैव कृते भविष्यतीति' तदा सोऽपि संघातत्वात् चतुर्थसंघाताय, चतुर्थश्च पञ्चमाय, पञ्चमश्च षष्ठायेत्यनवस्थादोष आपतेत्। तस्मात् सर्वोपभोक्ताऽसंघातरूप आत्मा स्वीकरणीय एव, गत्यन्तराभावात्। संसारेऽसंहृतपदार्थ एव कश्चिन्नास्तीति घोषणा तूपहासास्पदम्। संघातशब्द एव सापेक्षतयाऽसंघातमपि पदार्थं गमयति। यदि कश्चित् साधुर्नास्ति तदाऽसाधुरपि कश्चित् कथमुच्येत। तस्मादिदं सिद्ध्यति यत् संघातात्मकशरीरादसंहृतात्मा पृथगस्तीति।

सज्जनाः। उपर्युक्तैस्तर्कैः सिद्धमिदं जायते यत् सुखदुःखादीनां कर्मफलानां भोक्ता तथाऽनुभवस्मृत्यादिसर्वप्रकाराणां ज्ञानानामाश्रयभूतः शरीरेन्द्रियमनोभ्यो भिन्न आत्माऽस्तीति।



## आत्मा सर्वव्यापकोऽस्ति

अयमात्मा अणुपरिमाणो नास्ति। यद्यणुपरिमाण आत्मा भवेत् तदा स शरीरस्य कस्मिंश्चिदेस्मिन्नेव भागे पर्याप्नुयात्। अस्यां स्थितौ सकलशरीरमभिव्याप्यानुभूयमानं शैत्यं जाड्यं वा कथमुपपद्येत। एवमात्मनोऽणुपरिमाणत्वाभ्युपगमे स्वसुखदुःखयोरनुभवः स्वस्यापि न स्यात्। अणोरिवाणुगतधर्मस्यापि प्रत्यक्षाभावात्। इदं च मनआत्मवादखण्डनप्रसङ्गे प्रत्यपादि। एवं

योगदर्शनस्य विभूतिपादे निरूपितमस्ति यद् योगिनो योगशक्त्या एकस्मिन्नेव समयेऽनेकान् कायान्निर्माय विभिन्ना अनुभूतीः प्राप्नुवन्तीति। इदं तदैव संभवेत् यद्यात्माऽणुरूपो न भवेत् तथा समस्तान् निर्माणकायान् व्याप्तवान् भवेत्। येषां तु एवंविधेषु योगचमत्कारेषु तथा महर्षिपतञ्जलेः सूत्रेषु विश्वासो नास्ति, तेषां कृते, इदमन्तरा, यत् "ते कतिपयकालं सिद्धयोगिनां शरणमुपगम्य स्वयमनुभवेयुः" किमपि प्रत्यक्षं प्रमाणं विशिष्टतर्को वा न शक्यते प्रस्तोतुम्।

यदि च शरीरसमो मध्यमपरिमाण आत्माऽभ्युपेयेत, तदा तस्यानित्यत्वापत्त्या कृतनाशाकृताभ्यागमदोषौ प्रसज्येयाताम्। एतच्च शरीरात्मवादखण्डनप्रसङ्गे स्पष्टीकृतमिति पुनरुक्तिर्नावश्यकी। उपर्युक्तयुक्त्या सिद्धं भवति यदात्मा नाणुपरिमाणो नापि मध्यमपरिमाणः किन्तु परममहत्परिमाणवान् सर्वव्यापकश्चास्तीति।

अत्रेयमाशङ्का समुदेतुमर्हति यत् आत्मा यदि परममहत्परिमाणो व्यापकश्च भवेत्तदा शरीर एव चेतनकर्माणि चलनभ्रमणवदनानि ज्ञानादीनि च कथं दृश्यन्ते ? उक्तक्रियाः लोष्टादिष्वपि स्युः।

अत्रेदमनुसन्धेयमस्ति–शरीरस्य चलनादिव्यापारो न तद्वर्तिनः केवलात्मनः कारणाद् भवति, किन्तु तदन्तर्वर्तिनोऽपरेऽपि पदार्थास्तत्र कारणानि भवन्ति। स्फुटमिदमस्ति यद्देहे मनः पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रयाणि पञ्च प्राणाश्च सन्ति, यान्युक्तासु देहक्रियासु स्वातन्त्र्येण साधनभावं भजन्ते। लोष्टादौ व्यापकात्मनः सत्त्वेऽपि इतरेषां ज्ञानसाधनानां कियासाधनानाञ्चाभावोऽस्ति। तस्माल्लोष्टादिकं कथं चलेद् वदेद् वा ? उदाहरणार्थं घटो गृह्यताम्। चेतनकुम्भकारद्वारा घटो निर्मितो भवति। किन्तु कुम्भकारमात्राद् घटो नोत्पत्तुमर्हति। अन्यान्यपि मृत्तिकादण्डचक्रसूत्रजलादीनि तत्रावश्यकानि भवन्ति। एतेष्वेकमपि विना कुम्भकारचैतन्यं निरर्थकं भवति घटनिर्माणे। एवमेव चलनवदनदर्शनश्रवणादिक्रियोत्पत्तावात्मापि यदीन्द्रियाण्यपेक्षेत, तदा किमत्राश्चर्यं का वाऽऽशङ्का ? लोष्टे तु विभुमात्मानं विहाय नेतराणि क्रियासाधनानि प्राप्तानि सन्तीति न तत्र चेतनक्रिया जायन्त इति।

अथवा त्यज्यतां तावद् दूरवार्ता। शरीराभ्यन्तर एव चेतनात्मनो विराजमानत्वेऽपि खञ्जः कथं न चलति ? एतदुत्तरं भविष्यति, पादौ न स्त इति।

अन्धः कथं न पश्यति ? उत्तरं भवेत्, चक्षुषी न स्तः। कथं न बधिरः शृणोति ? भवान् वक्ष्यति, श्रोत्रेन्द्रियमस्य नष्टमिति। घोरनिद्रायां सुषुप्तौ कस्यापि किमपि ज्ञानं कथं न जायते ? उत्तरं स्यात्, शरीरस्य यस्मिन् भागे मनसोऽवस्थानेन ज्ञानमुत्पद्यते, ततोऽपसृत्य पुरीतति नाड्यां मनः प्रविष्टं सत् त्वक्संयोगरहितं जायत इति। तर्हि लोष्टादौ कथं न ज्ञानं जायते ? इत्यस्योत्तरं जातम्। एतेषु ज्ञानसाधनेषु किमपि नास्तीति लोष्टादौ चेतनक्रिया न भवतीति।

संसारे सर्वप्राणिषु सर्वाणीन्द्रियाणि न भवन्ति। प्राणिषु मध्ये मनुष्यपशुपक्षिणामेव सर्वाणीन्द्रियाणि प्राप्तानि सन्ति। शेषप्राणिनस्तु विकलेन्द्रिया असमग्रेन्द्रिया वा भवन्ति। यथा-सर्पस्य पृथक् श्रोत्रेन्द्रियं न भवति। अतएव संस्कृत कोषेषु तस्य चक्षुःश्रवा इति संज्ञा कथिता भवति। मृत्तिकामुद्वमतां चारेत्यभिधानवतां प्राणिनामितरेषां चैवंविधानां प्राणिनां त्वगिन्द्रियातिरिक्तानीन्द्रियाणि न भवन्ति। संक्षेपत इदमित्थं परिभाषितुं शक्यते यत् संसारस्य सर्वे प्राणिनः त्वगिन्द्रियवन्तो भवन्ति। मनुष्यपशुपक्षिणां समग्राणीन्द्रियाणि भवन्ति। यज्जातीयः प्राणी न वदति, तस्य श्रोत्रेन्द्रियं न भवतीति ज्ञातव्यम्। यतो हि श्रोत्रेन्द्रियस्य वागिन्द्रियेण सहास्ति परस्पराश्रितः सम्बन्धः। एकस्य पक्षिणो विरावमाकर्ण्य पक्ष्यन्तराण्यपि विरावमारभन्ते। अथवा पक्ष्यन्तरं श्रावयितुमेवैकः पक्षी शब्दं करोति। एतावता प्रतीयते, तस्यैव श्रोत्रेन्द्रियं भवति यस्य वागिन्द्रियं भवति। अत एव सर्पानपि शब्दयतो दृष्ट्वा प्राचीनकोषकारास्तेषां पृथक् श्रोत्रेन्द्रियाभावेऽपि चक्षुषैव श्रोत्रेन्द्रियकार्यसम्पादनात् चक्षुःश्रवा इति संज्ञामुल्लिखन्ति। ये मूकप्राणिनः परस्परं पङ्क्ति बद्ध्वा समूहं वा विधाय सञ्चरन्ति, तेषां श्रोत्रेन्द्रियाभावेऽपि चक्षुरिन्द्रियं भवतीत्यवगन्तव्यम्, यथा पिपीलिकाप्रभृतीनाम्। एवंविधाः प्राणिनः चक्षुरन्तरा क्रमबद्धाः समूहबद्धा वा भूत्वा चलितुं न शक्नुवन्ति। एतद्विषये प्राणिशास्त्रस्य पण्डिता विशेषेण प्रकाशयितुमर्हन्ति। मया त्वत्रैतावन्मात्रं साधनीयमस्ति यद् यस्मिन् ज्ञानसाधनानि यावन्तीन्द्रियाणि भविष्यन्ति, तस्य तावन्त्येव ज्ञानानि भविष्यन्तीति। एतानि इन्द्रियाणि लोष्टे वा प्रस्तरे वा सर्वथैव न भवन्तीति तत्र न किमपि ज्ञानं जायते, कामं तत्रापि विभोरात्मनो व्याप्तिरस्तीति। अत आत्मनो विभुत्वाङ्गीकारे काचिदापत्तिर्नास्ति।

इदानीं यावद् युक्तिभिरात्मनः सिद्धिस्तत्स्वरूपस्य च वर्णनं कृतम्।

परस्तादिदं बोधयितुं प्रयसिष्यते यत् कर्मानुसारेण मृत्यूपरान्तं पुनर्जन्मापि भवतीति। तत्र च प्रथमं युक्तिभिस्तदनन्तरं वैदिकैरन्यैरन्यैश्च प्रमाणैः पुनर्जन्म साधयिष्यते।



## पुनर्जन्मनि युक्तयः

कतिपयाधुनिकशिक्षाशिक्षितानां चार्वाकाणां कथनमस्ति यद् यावत्कालं प्राणी जीवति, तावत्कालपर्यन्तं शरीरेण सह चेतनात्मा मन्यताम्, किन्तु मरणोपरान्तमपि सोऽस्तित्वं धारयतीत्यत्र किमस्ति प्रमाणम्? अर्थादेकं शरीरं विहायात्मा शरीरान्तरं न धारयतीति। यदि स एवात्मा शरीरान्तरं धारयेत् तदा यथाऽस्मिन् शरीरे बाल्येऽनुभूतस्य स्मरणं भवति, तथैव पूर्वजन्मन्यनुभूतपदार्थानामपि अस्मिन् जन्मनि स्मरणं जायेत। किन्तु नैवं भवति, अतो नित्यात्माङ्गीकारस्तदीयपुनर्जन्मस्वीकारश्चात्यन्तमसङ्गतौ स्यातामिति।

अत्रेदमुत्तरं तेषां कृते भवति यत् तैर्न स्वीयाचार्यमन्तव्यानि सम्यक्तया शिक्षितानि। तैर्वक्तव्यमिदं यत् शरीरेण सहैवात्मनोऽपि विनाशित्वे किं प्रमाणमस्तीति? यदि देहवदात्माऽपि सावयवोऽभविष्यत् तदाऽग्निना सोऽपि नष्टोऽभविष्यत्। परन्त्वात्मा तु निरवयवपदार्थोऽस्ति। अतोऽग्निना केनापि शस्त्रेण वा तस्य विनाशो नैव भवितुं शक्नोति। तस्माद् विनाशकारणाभावादात्मा नित्यः, नित्यत्वाच्चैकदेहं विहाय देहान्तरधारणरूपं पुनर्जन्मापि स्वत एव सिध्यतीति।

एवमिदमपि दृश्यते यत् प्रत्यग्रोत्पन्नो बालः कदाचिद्धसति कदाचिद् रोदिति कदाचिच्च भयात् कम्पत इति। एतावता किमवबुध्यते? अवबोधनीयन्तु इदं यद् यथा वयं हसामो रोदिमो वेपामहे वा, तत्कारणञ्च भवति अस्मदन्तर्गतो हर्षः शोको भयं वेति। तत्र हर्षस्य कारणं भवति सुखसाधनस्य वस्तुनः प्रत्यक्षोपलब्धिस्तत्स्मरणं वा। दुःखस्य कारणमस्ति दुःखसाधनस्य प्रत्यक्षोपलब्धिस्तत्स्मृतिर्वा।

अत्र बालप्रवृत्तीनां सम्बन्धे इदं विचारणीयमस्ति यदमुकपदार्थात् सुखं भवति अमुकपदार्थाच्च दुःखमिति तस्याद्यावधि अनुभव एव नास्तीति कथं तं पदार्थं दृष्ट्वा स हसेद् रुद्याद् वा। अतोऽस्माभिरिदमवश्यं मन्तव्यं यद्बालस्य

तदानीं तथाविधानुभवाभावेऽपि तथाविधं स्मरणमेव भवति, यत्प्रभावात् स कदाचिद्धसति रोदिति च कदाचिदिति। एवं तथाविधस्मरणार्थं कादाचित्कोऽनुभवो भूतो मन्तव्यः। किन्तु प्रत्यग्रोत्पन्नस्य बालस्य तदानीं कोऽपि नानुभवो जातोऽस्तीति हेतोरिदमप्यवश्यं मन्तव्यं भविष्यति यज्जन्मान्तरकृतादनुभवादेवास्मिन् समये स्मृत्वा बालो हसन् रुदन् वा दृश्यत इति। अतोऽपि सिध्यति यत् पुनर्जन्म भवतीति।

यच्चुच्यते, "पद्मं यथा कदाचिद् विकसति कदाचिच्च संकुचति, परन्तु तस्य किमपि कारणं न भवति, तद्वदेव शिशोर्मुखमण्डलं निर्निमित्तमेव विकसति म्लायति च कदाचिदिति न तत्र जन्मान्तरानुभवः कारणमस्तीति" तदास्या उक्तेरिदमेवोत्तरमस्ति यत् पद्मस्यापि विकासो न स्वाभाविकः किन्तु रविकिरणमासाद्य तद् विकसति। एवमेव वयं सततमनुभवामः। तथैव शिशोर्हसनमपि न स्वाभाविकम् (अकारणम्) अस्ति, किन्तु किमप्युद्बोधकमासाद्य सुखजनकसाधनानि स्मृत्वाऽऽत्मनि समुत्पन्नादानन्दादेव निमित्ताद् बालस्य मुखमण्डलं विकासमापद्यते। एवं तत्स्मरणस्य कारणं नैतज्जन्मानुभवोऽस्ति, प्रत्यग्रजाते बाले तदभावात्। किन्तु पूर्वजन्मानुभव एव तत्र स्मृतिकारणमिति मन्तव्यमेव, गत्यन्तराभावात्। अत्रेदमवधानीयं यज्जगति किमपि कार्यं स्वाभाविकमकारणं न भवतीति। तदुक्तं जयन्तभट्टेन न्यायमञ्जर्याम्—

तस्मान्मुखविकासस्य हर्षो हर्षस्य च स्मृतिः।
स्मृतेरनुभवो हेतुः स च जन्मान्तरे शिशोः॥ इति।

अर्थात् बालके मुखविकासस्य कारणं तस्यान्तरो हर्षः, हर्षस्य कारणं स्मरणमस्ति, स्मरणस्य च कारणं पूर्वानुभवोऽस्ति। अनुभवश्चास्मिन् जन्मनि न तस्य कदाचिदभूदिति जन्मान्तरानुभव एव शिशोरङ्गीकरणीय इति जन्मान्तरं सिध्यति।

इदमपि दृश्यते, यज्जन्म गृह्णत्येव बाले दुग्धाभिलाषो जागर्ति, स च स्तनाभिमुखं प्रवर्तते। अत्रापीदमेव कारणमस्ति यद् गते जन्मनि तस्यायमनुभव आसीद् यद् दुग्धपानं तृप्तेः साधनमस्तीति। तादृशानुभवजन्यसंस्कारबलाद् दुग्धे तृप्तिसाधनतां स्मृत्वा तत्पातुमुन्मुखो जायते। इतोऽपि पुनर्जन्मसिद्धान्तः पुष्टिमाप्नोति।

अत्रापीदमाशङ्कितुं शक्यते यद् यथा लौहं जडमपि चुम्बकाभिमुखमाकृष्टं भवति, तच्च स्वभावात्। तथैव स्वभावादेव शिशुरपि स्तनाभिमुखमाकृष्यत

इति। किन्तु तत्रापि सूक्ष्मेक्षिकया विचारे क्रियमाणेऽवगतं स्याद् यल्लौहाकर्षणमपि नाकारणमस्ति, किन्तु चुम्बकीयशक्त्यैव तथा भवति। अन्यथा अन्यधातुष्वपि तल्लौहमाकृष्येत। तथैव शिशोरपि स्तनाभिमुखमाकर्षणं नाकारणमस्ति, किन्तु सकारणमस्ति। विशेषस्त्वयमस्ति यच्चुम्बक इव दुग्धे काचिदाकर्षणशक्तिर्नास्ति। अतो मन्तव्यमिदं स्याद् यच्छिशुरेवानादिवासनावशाद् दुग्धमात्मन उद्दीप्तक्षुधानिवृत्तिसाधनं जानानस्तदभिमुखं प्रवृत्तो जायत इति।

यदि पुनराशङ्क्येत यद् "यदि बालस्याकस्मान्मुखविकासस्य स्तनाभिमुखं प्रवृत्तेश्च कारणं पूर्वजन्मानुभवजन्यसंस्कारादुत्पन्ना स्मृतिरस्ति, तदा पूर्वजन्मघटितानां सर्वासां घटनानां स्मरणं सदा सर्वेषां जायेत" इति। किन्त्वेतस्याः शङ्काया उत्तरप्रदानात् पूर्वं भवानपि पृष्टो व्याचष्टां यदस्मिन्नेव जन्मनि अद्यावधि घटितानां समस्तघटनानां सक्रमं स्मरणं किं भवतोऽपि भवति ? आमिति चेत्, ब्रूतां, १९४० तमख्रीस्ताब्दस्य जुलाईमासस्य तृतीयतारिकायां क्व क्व गतं किं किं च भक्षितं भवतेति ? नूनमेवंविधानां प्रश्नानामुत्तरं भवत्पद्धत्या न केनापि दातुं शक्यते।

सर्वतन्त्रसिद्धान्तस्त्वयमस्ति यत् किमपि स्मरणं किञ्चिदुद्बोधकसाहाय्यमन्तरा न भवति। वयं यदा कस्यापि स्वपरिचितजनस्य किमपि वस्तु पुरतः पश्यामस्तदा झटिति तद्व्यक्तेः स्मरणमुत्पद्यते। एवंविधानुभूतिः प्रत्येकं मनुष्याणामस्ति। एतदनुसारं भवानिदमेव कथयेद् यद् यदा यासां घटनानामुद्बोधकं समक्षमायाति तदा तासां स्मरणं जायत इति। शेषघटनानान्तु स्मारकाभावात् स्मरणं न भवतीति। तर्हि अस्त्विदमेवोत्तरं भवदुक्तशङ्काया अपि। अर्थात् पूर्वजन्मनः सर्ववृत्तान्तानां स्मरणमस्मादेव कारणान्न भवति यत् सर्वस्य प्रबलमुद्बोधकं नास्तीति। स्तनादिषु शिशोः प्रवृत्त्यादेस्तु स्वाभाविकं क्षुधादिकमेव प्रबलमुद्बोधकं भवति। समये समये बहून्येवंविधान्युदाहरणानि मिलन्ति यत् कश्चित् कश्चिज्जनः प्रबलोद्बोधकद्वारा पूर्वजन्मनो बहून् वृत्तान्तान् स्मृत्वा मुखतो वर्णयतीति।

एतदतिरिक्तमपि पुनर्जन्मसिद्धये विषयविशेषे पाठकानां ध्यानमावर्जयामि। स चायं यन् नितान्तं समानवातावरणे समानसाधनेषु च सत्स्वपि बहुषु बालकेषु मध्ये कश्चित् कतिपयदिनेष्वेव विशिष्टामुन्नतिमधिगच्छति, अवशिष्टाश्च ततो भृशं पश्चाद्वर्तिनो जायन्ते। कोऽत्र हेतुः ?

अर्थात् कयोश्चित् पित्रोः द्वौ बालौ एकस्मिन्नेव दिने एकस्यामेव घट्यां युग्मावेवोत्पन्नौ भवतः। तयोः समाने लालनपालने भवतः। समानानां भोजनवस्त्राणां संसर्गस्य चात्यन्तसावधानतया प्रबन्धो भवति। सहैवैकस्मिन्नेव विद्यालये एक एव शिक्षकस्तौ समानमेव विषयमध्यापयति। परन्तु अग्रे गत्वा तयोरेकोऽग्रेसरो जायते। अर्थात् प्रतिवर्षं प्रथमश्रेण्यामुत्तीर्णोऽव्यवधानेन कक्षातः कक्षान्तरं प्राप्नोति। द्वितीयश्च कथञ्चिदुत्तरति अनुत्तीर्णो वा जायत इति। अथवा एकः साहित्यं रोचयतेऽपरश्चेतिहासम्। एकः सदैव पठने मनो लगयति, अपरश्च मल्लविद्याप्रियो भवति दुश्चरित्रैर्वा सहेतस्ततो भ्रमणमेवाभिलषति। अस्यां परिस्थितौ पुनर्जन्मानभ्युपगन्तारोऽपि जना झटिति कथयन्ति, यदस्य संस्कारः साधुरासीत्। अत एवैकोऽपरापेक्षयाऽतिशीघ्रमुन्नतिमध्यगच्छदिति।

परमेवंवादिभिर्जनैर्नैतद् विचारितं यदेकस्य बालस्य साधुसंस्कारः कुत आपतितोऽपरश्च वराकस्ततो वञ्चित एवावर्तत। यतो हि द्वयोर्बाल्योर्वातावरणं समानमेवासीत्। अतो नूनमिदं मन्तव्यं भवेद् यत् पूर्वजन्मत एव तयोर्द्वयोः संस्कारवैषम्यं प्राप्तमस्तीति। अतएवास्मिन् जन्मनि विद्याचारवैषम्यमजायतेति च। एतद् विहाय नास्य प्रश्नस्यान्यत् किमप्युत्तरमस्ति।

एवं संसारस्य कोऽपि प्राणी रागशून्यो न जनिं गृह्णाति, सराग एव जायते। यथा, पक्षिणां कणभक्षणेऽधिको रागो भवति, पशवश्च घासचरणे जन्मत एव रागवन्तो भवन्ति। किं कश्चिद् वक्तुं पारयेद् यदेवंविधा रागाः केवलमेतज्जन्मप्रभावात् प्राप्ताः सन्तीति। नैव। अत इदं मन्तव्यं भविष्यति यज्जन्मान्तरप्रभावादेव प्राणी यस्मिन् कस्मिन् वस्तुविशेषे रागवानेवोत्पद्यत इति।

एतेन सहैवेदमपि विचारणीयमस्ति यत् कथं मूषका अत्यन्तमेव लोभिनस्तथा यतस्ततो वस्तूनां सङ्ग्रह एव सदा लिप्ता भवन्ति? कथन्तरां कूजन्त्याः स्वप्रियतमायाश्चञ्चुचुम्बने सदा निरताः कपोता अतिशयेन कामिनो भवन्ति? कथन्तमाञ्च ज्वलद्विषवह्निज्वालायाः कारणात् फणान् स्फारयन्तः सर्पा अत्यन्तमेव क्रोधिनो भवन्ति? कथं संसारे कश्चित् सुखी दुःखी वा कश्चित् तिष्ठति? कथं कस्याप्यकस्मान्निधिर्लब्धो भवति? कस्याप्युपरि वा सहसा विद्युत्संपातो जायते? तथा किं कारणमस्ति यत् कश्चिदनायासमेव साफल्यं लभते, कश्चित्तु लक्षशः प्रयतमानोऽप्याजीवनं निष्फल एव तिष्ठतीति।

२

एतेषां तथ्यानां किञ्चित् प्रत्यक्षकारणाभावात् परमतार्किका दिव्यदृष्टयो महर्षयोऽदृष्टमेव कारणं मेनिरे। इदमदृष्टमेव धर्माधर्मरूपेण पूर्वजन्मनः साध्वसाधुकर्मरूपेण वा व्यवहरन्ति शास्त्रकर्त्तारः। अर्थात् स्वस्वपूर्वजन्मकृतेभ्यो विचित्रकर्मभ्य एव कारणेभ्यः संसार इमा विचित्रता दृश्यन्ते। यद्यपि क्षणभङ्गुरस्वभावानि कर्माणि तत्काल एव नश्यन्ति, तथापि तेषां संस्कारास्तु तिष्ठन्त्येव। तथा चैवंविधसंस्काराणामाश्रयरूपेणैतज्जनेः पूर्वमप्यात्मनः स्थितिर्मन्तव्यैव। ततश्च स्वत एवेदं सिध्यति यदयं शारीर आत्मा नित्यः सन् निजकर्मानुसारेण पुनःपुनरनेकजन्मानि धारयतितमामिति।

सज्जनाः! उक्तयुक्तिभिः सिद्धमेवैतद् यत् पुनर्जन्मावश्यमेव भवतीति। वैदिकसिद्धान्तमिमस्माकं प्राञ्चो महर्षयो निजयोगबलेन दृष्टवन्तो बभूवुस्तथा समस्तानां लौकिकपारलौकिकमर्यादानां मेरुदण्डमिवामन्यन्त।

अतः परमहं तैरेव महर्षिभिः स्वध्यानावस्थायां प्रत्यक्षीकृतानामीश्वरीयादेशरूपाणां वैदिकानां शास्त्रीयाणाञ्च प्रमाणानामुपस्थापनं पाठकसमक्षं विधास्यामि। यतो हि मनोः—

आर्षधर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥

इति वचनानुसारेण तर्कनिकषे परीक्षितमपि सिद्धान्तं समाजस्तावन्न श्रद्धत्ते यावद् वेदशास्त्राणि साक्षीणि भूत्वा तं श्रद्धास्पदं न विदधति। इयमेवास्माकी परम्परा। अतोऽत्र कतिपयवैदिकलौकिकशब्दप्रमाणान्यप्युपस्थापयितुमहमावश्यकं मन्ये।



## वेदेष्वप्रामाण्यशङ्का तत्समाधानञ्च

वैदिकप्रमाणानामुद्धरणात् पूर्वमिदं विचारणीयमस्ति यद् येषां वेदानां रचनायाः समयस्य कर्तुश्च कश्चिन्निश्चयो नास्ति येषु असत्यता-पूर्वापरविरोध-पुनरुक्तिदोषाणां सद्भावेन प्रामाण्ययोग्यताऽपि नास्ति, तेषां वेदानां पुनर्जन्मनि प्रामाण्यं कथङ्कारमभ्युपगम्येत ? तथाहि—

यथा "चित्रया यजेत पशुकामः, पुत्रकामः पुत्रेष्ट्या यजेत" इति विधिवाक्याभ्यां पशुकामाय चित्रायागो विधीयते पुत्रकामाय च पुरुषाय पुत्रेष्टिनामा यागो विधीयत इति। अर्थात् पशुकामो जनश्चित्रानामकं यागं कुर्यात् पुत्र-

कामश्च पुत्रेष्टिनामकं यागं कुर्यादिति। एतद्द्वयमपि वैदिकवाक्यं तदाऽसत्यं सम्पद्यते यदा कृतेऽपि तत्तद्यागे तत्फलं नासाद्यते, अर्थात् यागः कृतः किन्तु तत्फलं पशुर्वा पुत्रो वा न लब्धः। एतेन निष्फलत्वेन तद्वेदवाक्यमसत्यं सिध्यति।

परस्परविरोधदोषोऽपि। यथा—"उदिते जुहोति" इति मन्त्रद्वारा सूर्योदये हवनस्य विधानं कृत्वाऽग्रे स्वयमेव "श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति" इति वाक्यद्वारा सूर्योदयकालिकस्य हवनस्य निन्दा क्रियते। इत्थञ्च परस्परविरोधादिदं द्वयमपि वेदवाक्यमप्रामाणिकत्वं भजते।

वेदे पुनरुक्तिदोषो यथा—"त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह" अत्र प्रथमाया उत्तमायाश्चोभयोः सामधेन्योः ऋचोः त्रिस्त्रिवारं पठनस्य विधानमस्ति। एकवारानुवचनेनैव प्रयोजनं सिद्धं भवितुं शक्नोति, तथापि त्रिः त्रिः पठनं पुनरुक्तिदोषाधायकं स्यात्। तथा च न्यायोपबृंहितं गौतमीयं पूर्वपक्षसूत्रम् "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" (न्या. द. अ. २ आ० १ सू० ५७) इति। इत्थं स्थालीपुलाकन्यायेन वेदस्यैकांशस्याप्रामाणिकत्वे समस्ते वेदभागे प्रामाण्यं सन्दिग्धमापद्यते।

उपर्युक्तानां शङ्कानामुत्तराण्याह महर्षिगौतमः-"न कर्मकर्तृसाधनवैगुण्यात्, अभ्युपेत्य कालभेदे दोषवचनात्, अनुवादोपपत्तेश्चेति" [1]सूत्रैः। अर्थात् यागस्य कादाचित्कनैष्फल्येन तद्विधायके वेदेऽसत्यत्वमापाद्याप्रामाण्यकथनं नोचितम्। यतो हि पशुपुत्रादिफलाप्राप्तेः कारणं वेदवाक्यस्यासत्यत्वं नास्ति, किन्तु यज्ञसम्बन्धिविधीनां प्रयोगे त्रुटिरेवास्ति। यतो हि यत्र सम्पूर्णविधिपूर्वकमपि पुत्रेष्टिः क्रियेत किन्तु स्त्रियां पुरुषे वा पुत्रोत्पादनेऽपेक्षिता शक्तिरेव न भवेत्, तत्र कथं नु पुत्र उत्पत्तुं शक्नुयात्? तस्माद् यदा पुत्रोत्पत्तेः सर्वाऽपि सामग्री समुपतिष्ठेत, तदैव यागस्य पुत्रोत्पत्तिफलजनकत्वं संभवि, नान्यथा। अत एव कृतेऽप्यौषधोपचारे यदि कुपथ्यकारणाद् रोगो न निवर्तेत तदा तत्र चिकित्साशास्त्रस्याप्रामाण्यं नैव मन्यते। तद्वदिहापि ज्ञातव्यम्।

द्वितीयशङ्काया गौतमीयसमाधानसूत्रस्यायमभिप्रायः—अग्न्याधानसमये उदितानुदितसमयाध्युषितानां कालानां मध्ये यत्कालसम्बन्धिनो हवनस्य प्रतिज्ञां यजमानः करोति, प्रतिदिनं तस्मिन्नेव काले तेन हवनं करणीयं न

१ टिप्पणी—न्या. द. अ. २ आ. १ सू. ५८, ५९, ६०।

प्रतिज्ञातकालातिरिक्तकाले। अतः कस्मिंश्चिदेकस्मिन् काले हवनं प्रतिज्ञाय यजमानो यदि कालान्तरे हवनं करोति तदा तदुद्दिश्यैव श्रुत्यन्तरेण निन्दा कृता "श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति" इति। एवंविधा निन्दा लोकेऽपि क्रियमाणा दृश्यते। यथा, कश्चिज्जनः कस्मैचिद् विशिष्टप्रयोजनाय कमपि जनं प्रति कथयति यदहमुकसमये भवन्तं द्रक्ष्यामीति। किन्तु स यदि पूर्वनिर्धारिते समये न मिलति तदा स स्वप्रतिज्ञातोऽपि च्यवते, तथा कालान्तरे मिलित्वा तत्फलमपि न प्राप्नोति, प्रत्युत निन्दायाः पात्रं भवति। एतादृश एव प्रसङ्गः "उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति" इत्यादिवाक्यतोऽपि दर्शितोऽस्ति। अतोऽत्र श्रुतिवाक्येषु परस्परविरोधगन्धोऽपि नास्तीति।

तृतीयशङ्कायाः समाधानसूत्रस्येदं तात्पर्यमस्ति यन्निष्प्रयोजना शब्दावृत्तिः पुनरुक्तिर्भवति दोषः, सप्रयोजना तु शब्दावृत्तिरनुवादो भवति, स च गुणः। तस्मात् "त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह" इत्यत्र पुनरुक्तिदोषो नास्ति, अनुवादरूपत्वात्तयोः। यतो हि तत्र प्रथमोत्तमयोः त्रिः त्रिः कथनस्य प्रयोजनमस्ति। तच्चेदम्—"इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण च बाधे, योऽस्मान् द्वेष्टि यं च वयं द्विष्मः" इति मन्त्रेण स्वद्वेषिणः शत्रोर्बाधोपस्थापनार्थं पञ्चदशसामधेनीरूपाणां वाग्वज्राणां विधानं कृतं विद्यते। किन्तु सर्वाः सामधेन्य ऋचः एकादशैव सन्ति। ताः पञ्चदशसंख्याकास्तदैव भवितुमर्हन्ति, यदा मध्यवर्तिनीनां नवसामधेनीनामेकैकवारं पाठः स्यात्, तथा पूर्वान्तिमयोः पाठस्त्रिस्त्रिवारं भवेत्। इत्थमेव हि पञ्चदशसंख्यानां पूर्तिर्भवति, नान्यथा। अतोऽत्रत्या पुनरुक्तिः सप्रयोजनाऽस्ति। लोकेऽप्यतिशीघ्रताज्ञापनार्थं "चल चल" इत्येक एव शब्दो द्विरावर्त्यते। परन्तु नात्र पुनरुक्तिदोषो भवति। तद्वदिहापि बोद्धव्यम्। अतो वेदेष्वसत्यानां विरुद्धानां निष्प्रयोजनानां च वाक्यानामसद्भावात् तेषां सर्वथैव प्रामाण्यमस्तीति मन्तव्यम्।

अत्रेदमवधातव्यं यदुपर्युक्ता वेदसम्बन्धिन्य आशङ्कास्तासां समाधानानि च तैरेव जनैः सम्बद्धानि सन्ति ये शब्दं तु प्रमाणतया मन्यन्ते किन्तूक्तदोषेभ्यो वेदान् प्रमाणं न मन्यन्ते। एते हि कियदंशेषु सूक्ष्मदर्शिनः सन्ति, अतएवैतदीयशङ्कानामुत्तराणि तद्रीत्या प्रदत्तानि। तथापि कतिपयस्थूलदृष्टिजनानां कथनमस्ति यद् "वृद्धवाक्यं प्रमाणमि" ति वयं न मन्यामहे वस्तुतत्त्वनिर्णयाय हि प्रत्यक्षमपेक्षामह इति। एतेषां प्रत्यक्षमात्रप्रामाण्याग्रहिलानां कृते तु पूर्वमेव बहूक्तमस्माभिः। अतः शब्दप्रमाणसम्बन्ध एव किञ्चिदपरं विवेचयामः।

यदि शब्दप्रमाणं नानुमन्येत तदाऽत्यन्तमेव सङ्कुचिते प्रत्यक्षसीम्नि जीवनस्य सर्वे एव व्यवहाराः शब्दायत्ता असम्भवाः सम्पद्येरन्। मन्यतां यत् पण्डितजवाहरलालनेहरूर्भारतस्य प्रधानशासकोऽस्ति। किं स भारतस्य कोणे-कोणे घटमाना घटनाः सदा स्वनेत्रैः पश्यति ? अथवा तथा सम्भवोऽस्ति ? नैव। देशस्य सर्वेऽधिकारिणः स्वस्वकार्याणां विवरणं साक्षात् परम्परया वोपरि प्रापयन्तितमाम्। तथा तस्मिन् तेन स्वरसतो विश्वासः करणीय एव भवति। गृहस्य बालका अन्तःपुरात् सन्देशमादाय वदन्ति यद् भोजनसामग्री प्रस्तुताऽस्ति, भोजनार्थमुद्यता भवन्त्विति। किं भवन्तस्तदानीं भोजनसामग्रीं पूर्वं नेत्राभ्यां निरीक्षन्ते तदनन्तरमेव भोजनार्थं हस्तपादौ प्रक्षालयतः ? न हि। बालस्यापि शब्दस्योपरि विश्वासः क्रियत एव। भवन्तः चिकित्सकानां गुरूणां रेलयानस्थानाधिकारिणां, किं बहुना नापितानां रजकानामपि वाक्येषु विश्वासं कुर्वन्ति तानि प्रमाणानि च मन्यन्ते। अन्यथा भवतां स्वजीवननिर्वाहोऽपि असम्भवः सम्पद्येत। किं विद्वद्भिर्निर्मिता इतिहासभूगोलग्रन्था अप्रमाणानि मन्येरन् ? नो चेत्, सदुपदेशभरिता अस्मद्वेदाः कथं नु अप्रमाणं स्युः ?

यद्युच्येत, वेदानां मूललेखकस्यादर्शनादप्रत्ययाद्वा ते प्रमाणतया स्वीकर्तुं न शक्यन्त इति, तदा भवान् पृष्टो व्याचष्टां यत् कथं हि स्वीक्रियतां यद् यं भवान् जानाति, स एव वस्तुत इतिहासस्य भूगोलस्य वा लेखकोऽस्तीति। अथवा तेन लिखितमसत्यं नास्तीति। एवं हि पदे पदे आशङ्काः कर्तुं शक्येत, यासामुत्तरं विश्वासमन्तरा नान्यद् भवितुमर्हति। यदि तु प्रामाणिकव्यक्तिद्वारा लिखितत्वादितिहासादिग्रन्थाः प्रमाणं सन्ति, तर्हि प्रामाणिकैः ऋषिभिर्द्वारा दृष्टत्वादीश्वरप्रणीता अपौरुषेया वा वेदा अपि प्रमाणं सन्ति। उक्तं च "ऋषयो मन्त्रद्रष्टारः" इति।

यदि तु प्रतिपादितविषयाणां सत्यत्वान्निर्दोषत्वाच्चेतिहासभूगोलग्रन्थानां प्रामाण्यमस्ति, तदा वेदोक्तविषयाणामपि क्वासत्यताऽस्तीति दर्शयितव्यम्। यच्च किमपि दर्शितं, तत्त्वनुपदमेव दत्तोत्तरम्। एतदतिरिक्तं वेदा एवैतादृशाः सन्ति यान् पाश्चात्यविद्वान्सोऽपि विश्वस्य प्राचीनतमग्रन्थतयाऽभ्युपगच्छन्ति। यदानीमितरसमाजः पूर्णजाङ्गलोऽसभ्यः पशुतुल्यश्चासीत् तदानीमपि विद्वच्चित्तचमत्कारिभिरोजस्विशब्दैर्वैदिकसभ्यताया वर्णनं वेदेषु मिलति। तेषां वेदानामप्रमाणीकरणं स्वमातृपितृवचनानामप्रमाणीकरणमिव किमिति न मन्येत ?

एवं, लौकिकपदार्थान् भवन्तो यथा पश्यन्ति तथा मन्यन्तां नाम, किन्तु येष्वलौकिकविषयेषु ज्ञानेन्द्रियाणां सामर्थ्यं गतिर्वा नास्ति, तेषां विषयाणां सम्बन्धे तर्कागमावेव प्रमाणतयाऽभ्युपगन्तव्यौ। विज्ञानरहस्यमजानतां जनानां कृते यथा वैज्ञानिकोषु प्रक्रियासु विषये वैज्ञानिकानां वचनमेव प्रमाणमङ्गीकरणीयं भवति, तद्वदिहाप्यनुसरणीयम्। विज्ञानक्षेत्रे यथा वैज्ञानिकयन्त्राणां साहाय्येन परीक्ष्य यथार्थतायाः परिज्ञानं भवति, तद्वदिहापि प्रबलप्रमाणानां युक्तीनाञ्च साहाय्येन वैदिकसिद्धान्तानामपि याथार्थ्यं स्वीक्रियते। तदर्थमेव न्यायवेदान्तादिशास्त्राणि सम्प्रवर्तन्ते।

पुनर्जन्मसम्बन्धे युक्तयः पूर्वमुपस्थापिताः। अनन्तरमिह युक्तिसिद्धस्य पुनर्जन्मसिद्धान्तस्योपरि श्रद्धोत्पादनाय साक्षिरूपतया वेदादिप्रमाणान्युपस्थापयिष्यन्ते। साक्षित्वमस्मात् कारणादुच्यते यद् वर्तमानयुगे सर्वप्रथमं तर्कानेवाद्रियन्ते जनाः। ते च प्रोक्ताः। परम्परागता शास्त्रीया मर्यादा त्वियमस्ति यच्छास्त्रं यद् वक्ति तत् प्राथमिकतया स्वीकरणीयं तथा शास्त्रोक्तिषु मनोदार्ढ्याय तर्कैरपि तदनुसन्धानं क्रियतामिति। एनामेव शास्त्रमर्यादामभिलक्ष्य भगवान् श्रीकृष्णो गीतायामाह—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥ इति।
(गी० १६-२३)



## वेदेषु जन्मान्तरवादः

"पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम्।
पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्या या स्वस्ति॥"
(ऋ० म० १० अ० ८ अ० १ सू० १० ऋचा ७)

पृथिवी (देवी) पुनः नः (अस्मभ्यम्) असुम् (प्राणम्) ददातु। पुनः द्यौः (द्युलोकाभिमानिदेवता) प्राणं ददातु। तथा अन्तरिक्षम् (अन्तरिक्षाभिमानिदेवता) अपि प्राणं ददातु। तथा सोमो देवता नः (अस्मभ्यम्) तन्वम् (शरीरम्) ददातु। एवं या पथ्या स्वस्ति (लोके परलोके च स्वस्तिः कल्याणमस्ति) तामपि पूषा (सूर्यो) ददातु।

अनेन मन्त्रेणर्षिः प्रार्थयति यद् यथाऽस्मिन् जन्मनि मम प्राणादीनां रक्षा पृथिव्यादितत्त्वैर्भवति, तथैव जन्मान्तरेऽपि भवत्विति ।

**अवसृज पुनरग्ने ! पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।**
**आयुर्वसान उपवेतु शेषः संगच्छतां तन्वा जातवेदः स्वाहा ॥**
(ऋ० म० १० अ० ७ अ० ६ सू० १६ ऋचा ५)

हे अग्ने ! (अग्निदेवते !) यः (मृतपुरुषः) आहुतः (मन्त्रद्वारा चितायां समर्पितः) स्वधाभिः (स्वधाकारद्वारा समर्पितैः जलादिभिः सह) चरति (गच्छति) तम् (प्रेतम्) पितृभ्यः (पितॄणां प्राप्त्यर्थं) पुनः अवसृजत (प्रेरय) । (अयं प्रेतः) आयुः (जीवनं) वसानः (धारयन् आयुर्युक्तः सन्निति-यावत्) शेषः (अस्थिस्वरूपं यजनीयशरीरम्) उपवेतु (प्राप्नुयात्) । जात-वेदः ! (हे अग्निदेवते ! तव कृपया) तन्वा (शरीरेण) सङ्गच्छताम् (स सङ्गतो भवतु) ।

अनेन मन्त्रेण सूचितं भवति यत् पञ्चभूतानां स्वप्रकृतौ लयो जायते । केवलो जीवात्मा एव देहान्तरं धारयन् वारं वारमिह लोके आयाति यातीति ।

**आ ते एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्यं दृशे ।**
**पुनर्नः पितरो ददातु देव्यो जनः जीवव्रातं सचेमहि ॥**
(ऋ० म० १० अ० ८ अ० १ सू० १५ ऋचा ४)

(हे सुबन्धो !) ते मनः पुनः आ एतु (आयातु) । (किमर्थम् ?) क्रत्वे (कर्मणे लौकिकवैदिकविषयायेति यावत्) दक्षाय (बलाय अथवा अपानाय अथवा प्राणाय), जीवसे (जीवनाय च) ज्योक् (चिरकालाय) सूर्यं दृशे च (सूर्यस्य दर्शनाय च अर्थात् अत्यन्तचिरकालपर्यन्तं जीवनाय च) ।

अनेन मन्त्रेण मरणोत्तरं जीवात्मनः पुनर्जन्म भूत्वा मनसा संयोगो भव-तीति प्रतिपादितम् ।

**पुनर्मा एत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।**
**पुनरग्नय धिष्ण्या यथा स्याम कल्पयन्तामिहैव ॥**
(अथर्ववेद का० ६ अनु० ६ सू० २ मं० १)

अस्मिन् मन्त्रे मृतस्य जन्मान्तरे पुनर्दृढेन्द्रियद्रव्यादिकृते प्रार्थना दर्शिता विद्यते ।

**आयो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुषे पुरूणि।**
**धास्युर्योनिं प्रथम आविवेश यो वाचमनुदितां चिकेत॥**
(अथर्व० का० ५ अनु० १ सू० १ मं० २)

एतज्जन्मनि कृतयोः पुण्यपापयोरनुसारेणैव जन्मान्तरे उत्तमयोनिं पश्वादिनीचयोनिं वा प्राप्तो भवति लोक इति मन्त्रेणानेन प्रतिपादितमस्ति।

**अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः।**
**स भूतो भव्यं भविष्यत् पिता पुत्रं प्रविवेशा शचीभिः॥**
(अथर्व० का० ११ अनु० २ सू० ५ मं० २०)

प्राणो देवतास्वपि मध्ये गर्भः सन् चरति, न केवलं मनुष्येषु। व्यापकोऽपि नित्योऽपि प्राणात्मा तत्तच्छरीरेण सह पुनरुत्पद्यते। स प्राणो भूतकालावच्छिन्नं भविष्यत्कालावच्छिन्नं च वस्तु आत्मीयशक्तिभिः प्रविशति, यथा पिता स्वशक्तिभिः पुत्रं प्रविशति, तद्वत्। इत्थं प्रकारेण मन्त्रोऽयं जीवात्मनः स्वकर्मप्रेरणया पुनर्गर्भे प्रवेशं प्रतिपादयन् जन्मान्तरं बोधयति।

**प्रथमेन प्रमारेण त्रेधा विष्वङ् विगच्छति।**
**अद एकेन गच्छत्यद एकेन गच्छतीहैकेन निषेवते॥**
(अथर्व० का० ११ अनु० ४ सू० १० मं० ३३)

अर्थात् शरीरमभिमन्यमानो जीवात्मा तेन शरीरेण तत्र प्रविष्टैरिन्द्रियैश्च पुण्यापुण्यात्मकानि कर्माण्यनुष्ठाय तत्फलोपभोगार्थं मरणानन्तरं स्वर्गनरकादीनि स्थानानि प्राप्नोतीति प्रतिपादयन् मन्त्रो मरणानन्तरं मनुष्यस्य त्रेधा गतिं बोधयति। अयं मन्त्रार्थः—प्रथमप्राप्तस्य भोगायतनस्य स्थूलशरीरस्य तदारम्भककर्मक्षयेण त्यागानन्तरं स जीवः त्रेधा प्रकारत्रयं नियमेन प्राप्नोति। एकेन पुण्यकर्मणा विप्रकृष्टं स्वर्गम्, तथा एकेन पापकर्मणा विप्रकृष्टं नरकम्, तथा एकेन पुण्यपापात्मकेन मिश्रितेन कर्मणा इहैव भूलोके सुखदुःखात्मकान् भोगान् सेवत इति।

पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा आगन् पुनश्चक्षुः पुनः श्रोत्रं म आगन्। वैश्वानरो अदब्धः तनूपा अग्निर्नः पातु दुरितादवद्यात्॥
(यजु० अ० ४ म० १५)

पुनः मे (मम) मनः आगन् (आगतम्)। पुनः आयुः (जीवनम्) आगन् (आगतम्) पुनः प्राणः आगन् (आगतः)। तथा चक्षुः श्रोत्रं च मे (मम) पुनः आगन् (आगते)। (एवं) वैश्वानरः (अग्निः) अदब्धः (अहिंसितः सन्) तथा

तनूपाः (शरीररक्षकः सन्) नः (अस्मान्) अवद्यात् (वक्तुमप्यनर्हात्) दुरितात् (पापात्) पातु (रक्षतु)।

**द्वे सृती अशृणवम् पितॄणामहं देवानामुत मर्त्यानाम्।**
**ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ॥**

(एते) द्वे सृती (द्वौ मार्गौ शुक्लकृष्णौ देवयानपितृयाननामकौ) अहम् अशृणवम् (श्रुतिवाक्याभ्यां श्रुतवानस्मि) देवानामुत मर्त्यानाम् (देवयानं तथा मरणशीलानां पितॄणां पितृयानञ्चेति) ताभ्यामिदं विश्वमेजत् (क्रियाशीलं समस्तं जगत्) समेति (संगतं भवति अथाद् मिलति) च (तथा) यदन्तरा पितरं मातरम् (यज्जगद्द्युरूपपितुः पृथिवीरूपमातुश्च मध्ये वर्तते)।

उपर्युक्तमन्त्राभ्यामिदं प्रतिपादितमस्ति यत् स्वस्वकर्मानुसारेण योनिः प्राप्यते। तत्र द्वयी गतिर्भवति, एका सा, या संसार (आवागमन) शब्देन उच्यते। द्वितीया ज्ञानिनां गतिरस्ति, यस्यां प्राणी जन्ममरणबन्धनात् सर्वदैव मुक्तो भवतीति।

**पुनरासद्य सदनमपश्च पृथिवीमग्ने!।**
**शेषे मातुर्यथोपस्थेऽन्तरस्यां शिवस्तमः॥**

(यजु० अ० १२ मं० ३९)

अग्ने! (हे अग्निदेवते!) अपश्च पृथिवीम् आसद्य (जलरूपं पृथिवीरूपं च स्थानं प्राप्य) पुनः अस्यामन्तः (अस्या उखायाः कुक्षिपात्रस्य मध्ये) शेषे (शयनं करोषि) यथा मातुरुपस्थे (यथा शिशुः मातुरुत्सङ्गे स्वपिति) शिवतमः (त्वं कल्याणमयो भव)।

अनेन मन्त्रेण जीवात्मनो जलादिमार्गे प्रवेशं प्राप्नुवतः पुनर्जन्मान्तरं प्रतिपाद्यते।

**वायुरनिलममृतमथेदं भस्मान्त शरीरम्।**
**ॐक्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर॥**

(यजु० अ० ४० मं० १५)

अनेन मन्त्रेणेदं प्रतिपादितं यदिदं शरीरमिहैव विनश्यति। पुनश्चान्यजन्मनि शरीरान्तरं धारणीयं भविष्यति। तस्मात्तदर्थं त्वं स्वकृतं स्मर। अर्थात् स्वकृतकर्मानुसारेणैव त्वया जन्मान्तरं प्राप्स्यत इति।

अत्र यद्यौदार्येण सदाशयतया च विचार्यतां तदा कस्यापि हृदयं स्वयमेवैतत्स्वीकरोति यदुपर्युक्तमन्त्रः पुनर्जन्मसिद्धान्तं प्रतिपाद्य लोकान् सत्कर्म-

करणाय कियतीं प्रेरणां ददातीति। किमेवंविधा जनहृदयानि स्पृशन्ती सत्कर्मप्रेरणा नास्तिकवादात् प्राप्तुं शक्येत ? अनुभवस्त्वयमेव वरीवर्ति यत् नास्तिकतैव स्वार्थपरायणताया उच्छृङ्खलतायाः कस्यापि दुष्कर्मणो वा मूलमस्तीति।



## उपनिषत्सु पुनर्जन्मवादः

पुनर्जन्मसम्बन्धे कठोपनिषदो नाचिकेतोपाख्यानं सर्वाधिकं जागरूकं प्रमाणमास्ते। नचिकेतसा यदा दृष्टं यत् तस्य पिता वाजश्रवसः ऋत्विग्भ्यो वृद्धा निरुपयोगिनीश्च गा दानरूपेण वितरति, तदा स पितुस्तत्कार्यमुपेक्षितुं नाशक्नोत्। स व्यचारयत्—

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः।**
**अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्।** इति।

(क० उ० १।३)

अर्थात् एवंविधानां गवां दाता आनन्दरहिताँल्लोकान् प्राप्नोति। अतएव नचिकेताः स्वपितरं तादृशकृत्याद् वारयितुं प्रायस्यत्, परं सोऽत्र साफल्यं नालभत। ततो वारं वारं नचिकेतसा एवमुक्ते यत् "मां कस्मै ददासीति" कुपितस्तत्पिता "मृत्यवे त्वा ददामि" इत्युक्तवान्। नचिकेतास्तु प्रसन्नतापूर्वकं तदाज्ञां शिरोधार्यां विधाय तत्क्षणमेव यमलोकमगमत्। तदनन्तरं यमराजनचिकेतसोर्मध्ये यः संवादोऽभूत्, सोऽत्यन्तमेव महत्त्वपूर्णोऽस्ति। ततस्तु पुनर्जन्मसिद्धान्तो मन्दप्रज्ञानामपि दर्पणे मुखमिव स्पष्टमाभासतेतराम्।

यमराजगृहे तिस्रो रात्रीर्यावदभुक्त्वैव स्थितं नचिकेतसं दृष्ट्वा तस्मै वरत्रयं दातुं स्वयं प्रतिज्ञातवान् यमराजः। तेषु प्रथमद्वितीयवरयोः प्राप्त्यनन्तरं तृतीयं वरं याचमानो नचिकेता यमराजं प्रति जिज्ञासते—

**येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।**
**एतद् विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः॥**

(क० उ० १।२०)

अर्थात् मृतानां मनुष्याणां विषयेऽस्तित्वविचिकित्सायां केचित् कथयन्ति "मरणोतरमपि आत्मा तिष्ठतीति"। केचित्तु वदन्ति "मरणोत्तरमात्मा

नैव तिष्ठतीति"। एतत्संबन्धे भवान् मामुपदिशतु, यथा चैतद्विषयकं ज्ञानं प्राप्तं भवेदिति।

यमराजस्तु विषयममुं स्प्रष्टुं नैच्छत्, तथा नचिकेतसं पुत्रपौत्रहस्त्यश्वसुवर्णविशालभूमण्डलदीर्घजीवनस्वेच्छानुकूलभोगानुपमलावण्ययुक्तस्त्रियस्तथाऽन्यानपि मानवदुर्लभान् भोगान् दातुं प्रलोभयन्नेतत्स्थाने वरान्तरं याचितुमभ्यभाषत। परं नचिकेताः सामान्यजिज्ञासुर्नासीत्। स स्वनिश्चये दृढः सन्नवोचत्—

**श्वो भावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः।**
**अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते॥**
(क० उ० १।२६)

हे यमराज! इमे भोगाः श्वः स्थातारो न वेति निश्चितं नास्ति। तथा एते सर्वेन्द्रियाणां तेजोऽपि नाशयन्ति। इदं सम्पूर्णं जीवनमपि तु स्वल्पमेवास्ति। तस्मात् तवैतानि हस्त्यश्ववाहनानि नृत्यगीतादिभोगाश्च तवैव पार्श्वे तिष्ठन्तु। मम तु नास्त्येषामावश्यकता।

तदनन्तरं नचिकेतसो दृढनिश्चयमालक्ष्य प्रसन्नचेता यमराज उवाच—

**स त्वं प्रियान् प्रियरूपांश्च कामान् अभिध्यायन्नचिकेतोऽत्यस्राक्षीः।**
**नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः॥**
(क० उ० २।३)

हे नचिकेतः! त्वया पुत्रधनादिप्रियपदार्थास्तथा मनोहरा अप्सरःप्रभृतयो भोगाः सविचारं त्यक्ताः। यस्यामधिकतरां मानवा बध्यन्ते, तां वित्तमयीं गतिं त्वं न स्वीकृतवानसि। अस्मात्कारणात् त्वं प्रशंसापात्रमसि। यमोऽग्रे वक्ति—

**न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।**
**अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे॥इति।**
(क० उ० २।६)

अर्थात् यो मूढो धनमदेनान्धो भूत्वा प्रमादपतिततया परलोकं तत्साधनं च न जानाति, तथाऽयमेव लोको वर्तते परलोकस्तु नास्तीति दुराग्रह्णाति, स पुरुषो वारं वारं मम जाले निपतति। अर्थाज्जन्ममरणपरम्परातो न कदापि मुक्तो भवति।

अनन्तरं नचिकेतसस्तृतीयप्रश्नस्य सविस्तरं विवेचनं कुर्वन् यमराजः पुनर्वक्ति—

**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।**
**स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥** इति।

(क० उ० ५।७)

अयमर्थः—स्वस्वकर्मज्ञानानुसारेण कतिपयदेहधारिणः शरीरान्तरधारणाय देवमनुष्यपशुपक्ष्यादियोनिं प्राप्नुवन्ति। कतिपये तु वृक्षादिस्थावरयोनिमधिगच्छन्ति। कठोपनिषद उपर्युक्तप्रसङ्गेषु पूर्णस्पष्टतया पुनर्जन्मसिद्धान्तः प्रतिपादितो दृश्यते।

अतः परं पुनर्जन्मसम्बन्धे बृहदारण्यकोपनिषदः कतिपयवचनानि ध्येयानि सन्ति। तथाहि—

"तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्य आत्मानमुपसंहरति, एवमेवायमात्मा इदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति" इति। ( बृ० उ० ९।४।४।३ )

"तद्यथा पेशस्कारी पेशसो मात्रामपादाय अन्यं नवतरं कल्याणतरं रूपं तनुते, एवमेवायमात्मा इदं शरीरं निहत्य अविद्याम् ( अचेतनावस्थां ) गमयित्वाऽन्यं नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम्"। इति। ( बृ० उ० ४।४।४ )

पेशस्कारी = सुवर्णकारः सुवर्णमादाय सुन्दरमाभूषणं रचयति, तद्वदात्माऽपि पित्रादिनवीनसुन्दरतरस्वरूपं रचयतीति। "तदेष श्लोको भवति, तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य। प्राप्यान्तं कर्मणस्तस्य यत् किञ्चेह करोत्ययम्। तस्माल्लोकात् पुनरैति अस्मै लोकाय कर्मण इति नु कामयमानः"। ( बृ० उ० ४।४।६ )

अर्थात् अस्यात्मनो मनो यस्मिन् अत्यन्तमासक्तं भवति, तदेव फलं साभिलाषो भूत्वायं कर्मणा सहैव प्राप्नोति। अस्मिन् लोकेऽयं यत्किंचित् कर्म करोति, तस्य कर्मणः फलं प्राप्य तल्लोकात् पुनः कर्मकरणायास्मिन् लोक आयाति।

उपर्युक्ता बृहदारण्यकमन्त्राः पुनर्जन्मवादस्य ज्वलन्त्युदाहरणानि सन्ति। एतदतिरिक्ता अप्यनेके प्रसङ्गाः तत्रत्या उदाहर्तुं शक्यन्ते। किन्तु तावत एवोदाहृत्यातः परं छान्दोग्यस्य कतिपयोदाहरणानि दीयन्ते।

**"यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत"** ( छा० उ० ३।१४।१ )

अर्थात् जीवस्य यादृशी वासनाऽस्मिन् जन्मनि भवति, तदनुसारमेव मृत्यूपरान्तमपि भवति। तस्माज्जन्मान्तरे यथा भवितुमिच्छेत् तदनुरूपामेव वासनां जनयेदिति।

**"तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा"** इति। (छा० उ० ५।९।७, ५।१०।७) स्पष्टोऽर्थोऽस्य मन्त्रस्य। अर्थात् शुभकर्मकर्ता मरणोत्तरं शुभामेव योनिं प्राप्नोति, अशुभकर्मकर्ता चाशुभां योनिं प्राप्नोतीति। नैतावदेव, किन्तर्हि ? अत्रत्यं समस्तमेव प्रकरणं मरणोत्तरं प्राप्तव्यानेकविधगतिसम्बन्धि विद्यत इति।

**असूर्या नाम ते लोका अन्धेन तमसा वृताः।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥** इति

मन्त्रोऽयम् ईशावास्योपनिषदस्तृतीयो मन्त्रोऽस्ति। अस्यायमर्थः—ये केचिदात्महन्तारो जना भवन्ति, ते सर्वे मृत्यूपरान्तं घोरान्धकारेण (अज्ञानेन) युक्तामसुराणां तमःप्रधानां योनिमापद्यन्त इति। अत्र त आत्मघातिन उच्यन्ते, ये पापकर्माणि कुर्वते। इतोऽपि पुनर्जन्मसिद्धान्तः पुष्टिमधिगच्छति।

**इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।**
**नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं विशन्ति ॥**

अयं मन्त्रो मुण्डकोपनिषदि द्वितीयखण्डे समुपलभ्यते। अस्यायमाशयः—ये जनाः इष्टं वैदिककर्मजातम् आपूर्तं च कूपारामादिकमेव सर्वश्रेष्ठं मन्यमाना आत्मज्ञाने श्रेष्ठत्वबुद्धिं नादधति, ते मरणोपरान्तं स्वीयानां तेषां पुण्यकर्मणां फलं स्वर्गलोक आभुज्य पुण्येषु क्षीणेषु जातेषु पुनरिमं मानवदेहमथवाऽत्यन्तहीनां शूकरादियोनिं प्राप्ता भवन्ति।

अस्या अप्युपनिषदः प्रायः सम्पूर्णं प्रकरणं मृत्यूपरान्तभाविनीरात्मनोऽनेकगतीर्वर्णयति। इत्थं प्रकारेण आत्मोद्धारमार्गमादर्शयन्त्यः प्रायः सर्वा उपनिषदो विशुद्धात्मतत्त्वज्ञानाभावदशायामात्मनो वारं वारं जन्मग्रहणं प्रतिपादयन्ति।



## भगवद्गीतासु पुनर्जन्मवादः

यद्यपि विश्वमान्यायां श्रीमद्भगवद्गीतायां पञ्चविंशत्यवसरेषु पूर्णस्पष्टतया पुनर्जन्मनः प्रतिपादनं कृतं विद्यते, तथापि त्रिचतुराणि तदीयोदाहरणान्यपि प्रदर्श्य श्रुतिस्मृतिप्रकरणमिदमवसाययिष्यते ।

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥
(गी० अ० २ श्लो० १३)

यथाऽस्मिन् देहे कौमारं यौवनं वार्धक्यं च निश्चयेन सर्वेषां भवन्ति, तथैवात्मनो देहान्तरस्यापि प्राप्तिर्भवीत्येवेति बुद्धिमान् जनो नास्य देहस्य कृते मोहग्रस्तो भवति ।

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥
(गी० अ० २ श्लो० २१)

मनुष्यो यथा प्राचीनवस्त्राणि त्यक्त्वा नवीनानि वस्त्रान्तराणि धारयति, तद्वदयमात्माऽपि प्राक्तनदेहं त्यक्त्वा त्यक्त्वा प्रतिजन्म नवं नवं देहं धारयति ।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥
(गी० अ० २ श्लो० २७)

इति भगवद्वचनमपि स्फुटं विज्ञापयति यदुत्पन्नस्य मृत्युर्निश्चितो मृतस्य च पुनर्जन्म निश्चितम् । अतो हे अर्जुन ! यदनिवार्यमस्ति तदर्थं शोको न विधेय इति ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥
(गी० अ० ४ श्लो० ५)

हे अर्जुन ! मम तव चेदानीं यावद् बहूनि जन्मानि व्यतीतानि सन्ति । अहं तु तानि सर्वाण्यपि जन्मानि वेद्मि । किन्तु हे परन्तप ! त्वं तु न वेत्सि ।

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥
(गी० अ० ४ श्लो० ९)

अर्थात् हे अर्जुन! इत्थंभूतं मदीयं जन्म च कर्म च यो वेत्ति सम्यग् जानाति, स मरणानन्तरं पुनर्जन्म न गृह्णाति, प्रत्युत मां प्राप्तो भवति।

इत्थमुपर्युद्धृतैर्गीतावचनैः पुनर्जन्मसिद्धान्तोऽतिस्पष्टतया समर्थितो भवति। अन्तिमेन श्लोकेनेदं प्रतिपाद्यते यद्यो मम जन्म कर्म च सम्यग् जानाति, स एव जनः पुनर्जन्म न गृह्णाति यस्तु नो जानाति, तेन तु पुनः पुनर्जन्ममरणबन्धनेऽवस्थातव्यमेव भवतीति।

एतत्पर्यन्तं पुनर्जन्मसम्बन्धे वेदोपनिषद्गीतानां यानि प्रमाणानि दत्तानि, तानि विशेषतस्तेषां कृते वर्तन्ते, य एषु विश्वमान्यग्रन्थेषु श्रद्धां तु धारयन्ति, किन्तु तदीयपुनर्जन्मवादं हिन्दुशास्त्रकाराणामुर्वरमस्तिष्कस्य कल्पनाप्रसूतं मन्यमानास्तस्मिन्न श्रद्दधति। अथवा स्वनवीनविचारैः सह संघट्टमालक्ष्य जन्मान्तरवादचर्चातस्सदाऽऽत्मनो विमुखीकृतवन्तस्तिष्ठन्ति। तेषामेवं-विधाया मनःस्थितेर्मुख्यं कारणमिदमस्ति, यत्ते वेदोपनिषत्सु गीतायाञ्चादर-भावं दूरत एव धारयन्ति। यदि तेऽमुमादरभावं क्रियात्मकं विधाय सामीप्ये-नैतेषां मननं कुर्युस्तदाऽवश्यं प्रकाशः प्राप्तः स्यादिति द्रढीयान् विश्वासः।

ये तु वेदान् उपनिषदो वा न श्रद्दधते आद्रियन्ते वा, तथा पुनर्जन्म-वादमपि व्यक्तिविशेषस्य समाजविशेषस्य वा मस्तिष्कस्योत्पाद इति प्रति-पादयन्ति। तेषामयमाशयोऽस्ति यत् कस्यापि वादश्चक्षुषी निमील्य कथं स्वीक्रियताम्?

एवंविधाशयवतामिदमुत्तरमस्ति यद् यदा ते दैनिकव्यवहारेष्वन्येषां कथनं प्रमाणं मन्यन्ते, अन्यलिखितानामितिहासादिग्रन्थानां प्रामाणिकत्वं स्वीकुर्वन्ति, तदा को हेतुर्येन वेदशास्त्राणि प्रामाणिकानि नाभ्युपगम्येरन्? अथवा तेषामेवैतस्मिन् कथने यत् 'पुनर्जन्म न भवति' कथं विश्वासः क्रियेत?

यदा हि संसारे रागद्वेषादिमात्राऽल्पीयसी समासीत्, तत्काले समुत्पन्नानां ज्ञानतपोबलसम्पन्नानामृषीणां वचनमविश्वसनीयं प्रतीयेत, तथा वर्तमान-समये, यदा च संसारस्य वातावरणमत्यधिकं स्वार्थपूर्णं रागद्वेषविषाक्तं च वरीवर्ति, जातानां जनानां वचनं कथं सत्यं विश्वसनीयञ्चावबुध्येत?

यदि भवान् पृच्छेद् यद् वर्तमानयुगादतीतं तद्युगमधिकं सन्नीतिसदाचाराभ्यां ज्ञानतपोभ्यां च सम्पन्नमासीदित्यत्र किं प्रमाणमस्तीति ? तदा वयं सविनयं निवेदयिष्यामो यत् सत्याहिंसाऽस्तेयादिकान् सर्वे जनाः श्रेष्ठान् गुणानाचक्षते समाद्रियन्ते च। किन्त्वेवमाख्यानस्य समादरस्य चाधारोऽस्ति महतां व्यवहाराः प्राचीनाः सद्ग्रन्थाश्चेति। अधुना स्वयमायुष्मन्तो विचारयन्तु, यद् येन युगेन प्रथमप्रथमममीषां गुणानां श्रेष्ठता संसारसमक्षं समुदघोषि, अवश्यं तद्युगमद्यतनयुगान् नैतिकमभूदिति। यतो ह्याचरणद्वारा पूर्णं परीक्ष्यैवामीषां श्रेष्ठता प्रतिपादिता सम्भवेदिति मन्तव्यम्।



## जन्मान्तरसम्बन्धे भारतीयदर्शनानि

### गौतमः

गौतमेन न्यायसूत्राणां प्रणेत्रा महर्षिणा न्यायदर्शने प्रथमाध्यायस्य प्रथमाह्निके प्रेत्यभावनामकस्य प्रमेयस्य लक्षणं वर्णयता सूत्रितम्—"पुनरुत्पत्तिः प्रेत्यभावः" इति। अस्मायमर्थः—मृत्यूपरान्तं पुनरुत्पत्तिरेव 'प्रेत्य (मृत्वा) भावः' इत्युच्यते। अत्र महर्षिणा गौतमेन शब्दत एव पुनर्जन्मसिद्धान्तसमर्थनममकारि।

एवम्, "पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः" (अ० ३ आ० १ सू० १९), "प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्" (अ० ३ आ० १ सू० २२) "वीतरागजन्मादर्शनात्" (अ. ३ आ. १ सू. २५) तथा "आत्मनित्यत्वे प्रेत्यभावसिद्धिः" (अ. ४ आ. १ सू. १०) इति गौतमीयन्यायसूत्राणि प्रसङ्गेऽस्मिन्नवधातव्यानि सन्ति। एतदीयपूर्वपक्षसूत्राणामभिप्रायोऽस्मिन्नेव ग्रन्थे युक्तिप्रकरणस्य विगतपृष्ठेषु सम्यगभिव्यक्तोऽस्ति। अत्र चतुर्थसूत्रस्य तात्पर्यमिदमस्ति यदात्मनो नित्यत्वे सत्येव पुनर्जन्म सिध्यति। अर्थात्—चार्वाकमतवद् यद्यात्मा विनाशी स्यात् तथा सति पुनर्जन्म कस्य स्यात्! अत एवास्माभिरप्यधस्तात् पुनर्जन्मनि युक्तिप्रदानात् पूर्वमात्मनित्यत्वसाधनाय प्रयासो व्यधायि।



### कणादः

वैशेषिकसूत्राणां प्रणेता महर्षिकणादः सूत्रयति "तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः" इति (वै० द० अ० ५ आ० २ सू० १८)। एतत्सूत्रद्वारा

महर्षिः मोक्षप्राप्तेः प्रक्रियां निर्दिशति। इदमस्य सूत्रस्य तात्पर्यम्—प्रथमं श्रवणमनननिदिध्यासनद्वारा तत्त्वस्य साक्षात्कारो भवति, ततः सवासनमिथ्याज्ञानं विनश्यति, ततो रागद्वेषमोहानां त्रिदोषाणां निवृत्तिर्जायते। एवं दोषाणामात्यन्तिकनिवृत्तौ जातायां मरणोत्तरं शरीरानुत्पत्तौ सत्यां शरीरेण सहात्मनः संयोगस्याभावो भवति। पुनश्चात्मनः शरीरसंयोगात्मकः प्रादुर्भावो न कदाचिदपि भवतीत्ययमेव मोक्षपदार्थः। अत्र "अप्रादुर्भावश्च मोक्षः" इति सूत्रांशेन पुनर्जन्मवादस्य समर्थनं कृतं विद्यते। यतो ह्युक्तप्रक्रियाया अननुगमने पुनः प्रादुर्भावोऽवश्यं भावीत्यपि सूत्रात् स्पष्टमालक्ष्यते।

इतः पूर्वमपि महर्षिणा सूत्रमेकमुक्तम्—"अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तराणि चादृष्टकारितानि" इति (अ० ५ आ० २ सू० १६)। अपसर्पणप्रभृतीनि कार्याणि अदृष्टान्निमित्ताद् भवन्तीत्येतत्सूत्रार्थः। अत्रापसर्पणशब्दार्थः पूर्वशरीरपरित्यागोऽर्थान्मरणम्। उपसर्पणपदार्थः मरणोपरान्तं देहान्तरे पुनः प्राणमनोभिः सम्बन्धः, पुनर्जन्मग्रहणमिति यावत्। इत्थञ्चास्मादपि सूत्रात् कणादमहर्षेर्जन्मान्तरवादसमर्थनं पाठकाः प्रत्येष्यन्ति।



## ईश्वरकृष्णः सांख्याचार्यः

सांख्यकारिकाग्रन्थे महामुनिरीश्वरकृष्णः सूक्ष्मशरीरं विषयीकृत्य कारिकामारचयति—

"पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्॥"

इति। (का० ४०)

अस्यां कारिकायां नियतपदार्थोऽस्ति—आसृष्टेः आ च प्रलयादवस्थितं सूक्ष्मशरीरमिति। तथा 'संसरति' पदार्थोऽस्ति—लोमलोहितमांसस्नाय्वस्थिमज्जारूपैः षट्कोशैर्निर्मितं शरीरं धृत्वा धृत्वा तत्परित्यागस्तथा त्यक्त्वा त्यक्त्वा पुनस्तद्धारणमिति।

मुनिः पुनरग्रे ब्रूते—

"तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन॥" (का० ५५)

अनया कारिकया इदं तावदाचार्यो बोधयति यच्चेतनपुरुषो जरामरण-परम्पराया दुःखं तावत्पर्यन्तमनुभवति यावद्धि प्रकृतिपुरुषविवेकज्ञानद्वारा तत्सम्बद्धं सूक्ष्मशरीरं न विनिवर्तत इति। महामुनेरीश्वरकृष्णस्येयं कारिका-द्वयी मोक्षात् पूर्वं वारं वारं जन्मभावं प्रतिपादयति। वर्तमानकालोपलब्ध-सांख्यसूत्राणां कपिलमहर्षिविरचितत्वे विवादात् शङ्कराचार्यप्रभृतिभिराचार्यैः स्थाने स्थाने सांख्यकारिकाणामेवोद्धरणाच्चास्माभिरपि कारिकैव प्रमाणतये-होदाहृतेति हि ज्ञेयम्।



## पतञ्जलिर्योगाचार्यः

योगदर्शनप्रणेत्रा महर्षिपतञ्जलिना निम्नोल्लिखितसूत्रैः पुनर्जन्मसम्बन्धे स्वीया सम्मतिः प्रादर्शि। तद्यथा—"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेद-नीयः (यो० द० समा० पा० सू० १२) अयमर्थः—अविद्या-अस्मिता-रागो-द्वेषोऽभिनिवेशश्चेति पञ्चैते क्लेशाः सन्ति। ते च मूलं यस्य कर्माशयस्य स कर्माशयो दृष्टजन्मवेदनीयो भवति अदृष्टजन्मवेदनीयश्च भवति। अस्मिन् जन्मनि जन्मान्तरे वा तत्फलं भुज्यत इति तात्पर्यम्।

"अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः" (यो० द० समा०पा० सू० ३९)। अर्थात् अपरिग्रहनामकस्य यमस्य स्थैर्ये सुदृढत्वे सम्पन्ने "कोऽहमासम्, कथ-मासम्, को भविष्यामि, कथं भविष्यामि इत्याद्या जन्मान्तरवृत्तान्ता ज्ञाता भवन्तीति। "संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्" (यो० द० वि० पा० सू० १८)। अस्यायमभिप्रायः—स्मृतिहेतवो वासनारूपाः संस्कारा भवन्ति, जन्मायुर्भोगहेतवश्च धर्माधर्मरूपाः संस्कारा भवन्ति। उभयेषां तेषां संस्काराणां साक्षात्कारसम्पत्त्या स्वपरपूर्वजन्मनो ज्ञानं जायत इति। इत्थ-मुपर्युक्तानि त्रीण्यपि सूत्राणि जन्मान्तरवादं समर्थयन्ति।



## जैमिनिः (पूर्वमीमांसाचार्यः)

"विश्वजिता यजेत" इति विधिवाक्ये विहितस्य विश्वजिन्नामकस्य यागस्य किमपि फलं कथितं नास्ति, केवलमेतावदेवोक्तमस्ति यद् विश्वजिद्यागं

कुर्यादिति। फलानुक्तौ कश्चिदधिकार्यपि न प्रतीयते, फलकाम एव हि मनुष्यो विहितकर्मण्यधिक्रियत इति। अत्रेयमाशङ्का समुदेति यत् श्रुतिविहितस्यास्य विश्वजिद्यागस्य किञ्चित् फलमस्ति वा न वास्ति ? यद्यस्ति, तदा तत्फलमेकमस्त्यनेकं वास्ति ? यद्येकमिति पक्षस्तदापि तत्फलमनिश्चितमस्ति ? निश्चितं वा किमप्यस्ति ? एतासां शङ्कानामुत्तरे महामुनिजैमिनिः सिद्धान्तमुपस्थापयति—विश्वजिद्यागस्य निश्चितं फलमस्ति, तच्च स्वर्गः। यतो हि स्वर्ग एव दुःखसंस्पर्शरहितो निरतिशयानन्दरूपश्चास्तीति हेतोः सर्वेषां कृते समानरूपेणाभीष्टोऽस्ति। तदुक्तं पूर्वमीमांसादर्शने "स स्वर्गः सर्वान् प्रत्यविशिष्टत्वात्" इति। (मी० द० अ० ४ पा० ३ अधि० ७ सू० १५)।

अनेनाधिकरणेनेदमपि सिद्ध्यति यत् मरणानन्तरमप्यात्मनोऽवस्थानमपरिहार्यं वर्तते। अन्यथा तत्फलस्य स्वर्गस्य भोक्ता को भवेत् ? एवं "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति वैदिकमान्यतानुसारेण जैमिनिमहर्षिरपि स्वर्गफलहेतोस्तत्पुण्यस्य क्षये जाते पुनरिह मर्त्यलोके तस्य जन्मग्रहणमङ्गीकरोति। एवमेव स्वर्गफलजनकानां यज्ञानां विधायकान्यपराण्यपि अधिकरणान्यात्मनो नित्यत्वस्य जन्मान्तरग्रहणस्य च समर्थकान्यवगन्तव्यानि।

जैमिनेरेकमन्यत् सूत्रमस्ति "योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात्" इति (अ० ४ पा० ३ अधि० १२ सू० २८) अस्यायमभिप्रायः—"चित्रया यजेत पशुकामः" इति श्रुतिर्विधानं करोति यत् पशुधनकामो जनश्चित्रानामकं यागं कुर्यादिति। अत्रेयमाशङ्का—पशुफलमैहिकं वाऽऽमुष्मिकं वाऽस्ति ? ऐहिकं फलं तद्भवति यदस्मिन्नेव जन्मनि प्राप्तं भवेत्, आमुष्मिकं च फलं तदस्ति यन्मृत्योरनन्तरं जन्मान्तरे प्राप्येत।

उपर्युक्तैतच्छङ्कायाः समाधानायैव महर्षिजैमिनिनोक्तसूत्रं प्राणायि। तद्द्वारा चेदं सिद्धान्तितं यदस्मिन्नपि जन्मनि पशुफलं प्राप्तुं शक्येत, यदि तत्प्रतिबन्धकं किमपि प्राक्तनं दुरितं न भवेत्। प्रतिबन्धकस्य दुरितविशेषस्य सत्त्वे तदेव फलं जन्मान्तरे लप्स्यते। अर्थात् फलप्राप्तिकालस्तत्रानियतः। यतो हि, न हि तद् विधिवाक्यं फलस्य जन्मान्तरेण सह सम्बन्धं निर्धारयति। श्रुतिस्त्वेतावन्मात्रं ब्रूते यच्चित्रायागेन पशुफलं प्राप्स्यत इति। तत्फलमिहापि जन्मनि भवितुमर्हति। अर्थात् पशुफलमैहिकमप्यस्ति, आमुष्मिकमप्यस्तीति। इत्यञ्चामुष्मिकफलकथनेन जन्मान्तरास्तित्वं सिध्यतीति।

स्वर्गफलन्तु निश्चयेनामुष्मिकमेव भवति। यतो ह्यस्याः कर्मभूमेर्दुःखमिश्रितत्वेन सर्वथैव दुःखसंस्पर्शशून्यः सुखात्मकः स्वर्ग इहासंभवी।

अस्मिन् सूत्रे योगसिद्धिशब्दस्यार्थोऽस्ति फलयोगस्य सिद्धिः। वाशब्दार्थो विकल्पः। अर्थशब्दश्च फलवाची वर्तते। तथा "उत्पत्त्ययोगित्वात्" इत्यंशस्य "जन्मान्तरे फलोत्पत्तिसम्बन्धस्य निश्चयात्मकप्रतीत्यभावात्" इत्यर्थः। तथाचेदं सूत्रं स्पष्टरूपेण जन्मान्तरवादस्य समर्थकं प्रतीयते। यदि पुनर्जन्मान्तरसिद्धान्तो महर्षिजैमिनेर्मान्यो नाभविष्यत्, तदात्र फलविषये ऐहिकत्वामुष्मिकत्वचर्चैव तेन नाकरिष्यतेति विज्ञेयम्।

शास्त्रदीपिकारेणोक्तसूत्रस्य व्याख्यानप्रसङ्गे स्पष्टमुक्तम्—

"विपाकः कर्मणां येषां प्राग्देहविनिपाततः।
प्राप्तस्तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे॥"

इति। अत्र 'भवान्तरे' इति पदस्य 'जन्मान्तरे' इत्यर्थोऽस्तीति संक्षेपः।



## बादरायणो व्यासः

वेदान्तसूत्रप्रणेतुर्महर्षिव्यासस्यापि पुनर्जन्मवादोऽभिप्रेतस्तदीयानेकवेदान्तसूत्रेषु स्पष्टमावेदितोऽस्ति। यथा—"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" (वे० द० अ० ३ पा० १ सू० ८) इति। अनेन सूत्रेण भगवान् व्यास इमामाशङ्कां समुत्थाप्य यत्—स्वर्गादधो मर्त्यलोकं पुनः प्रविशन् जीवः किं कर्मसंस्कारेण सहैवायाति? उत विना कर्मसंस्कारमायाति? समाधत्ते—यत् कतिपयकर्माशयं स्वर्गफलभोगेन क्षपयित्वाऽवशिष्टेन सञ्चितकर्माशयेन सहैव पुनरिह लोके जन्म गृह्णातीति। इदन्तु कथनमसमीचीनं यत् समेषां कर्माशयानां फलानि स्वर्ग एव भुज्यन्त इति। यतो हि यस्मिन् कालेऽश्वमेधयज्ञफलतया ऐन्द्रं पदं प्राप्तवान् भवति, तस्मिन्नेव काले पूर्वकृतपापकर्मणां फलस्वरूपं निम्नयोनिशरीरं कथं नु धारयितुं शक्नोति? तस्माद् वस्तुस्थितिरियमस्ति यत् सञ्चितकर्माशयेन सहैव जीवोऽस्मिन् लोके पुनर्जन्म गृह्णातीति।

अस्मिन्नधिकरणे महर्षिणा पुनर्जन्मवादस्य स्पष्टं प्रतिपादनं कृतं विद्यते। नैतावदेव, किन्तर्हि, तृतीयाध्यायस्य सम्पूर्णः प्रथमपादो जन्मान्तरवादविषये

महर्षेर्मान्यतामभिव्यनक्ति। तत्र पञ्चाग्निविद्यामुदाहरता मुनिना जीवस्य संसारगतिप्रकारो वर्णितः। तत्र "तदनन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" इति सूत्रस्य भाष्ये भगवत्पादैः श्रीशङ्कराचार्यैरुक्तम्—"जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते" इति। अत्र श्रुतिरप्युदाहृता "अन्यन्नवतरं कल्याणतरं रूपं कुरुत" इति। विस्तरभिया नेह सर्वाधिकरणानि सूत्राणि चोपन्यस्यन्ते। जिज्ञासवस्तत्रैव तानि द्रष्टुमर्हन्तीति।



## पुनर्जन्मनि जैनमतम्

पुनर्जन्मवादो जैनदर्शनस्यापि मान्योऽस्तीति जैनसम्प्रदायस्य सर्वस्मात् प्राचीनसूत्रकारस्य वाचकप्रवरस्योमास्वातेस्तत्त्वार्थाधिगमसूत्रेभ्यस्तदुपज्ञभाष्याच्च सिध्यति। यद्यपि दिगम्बराणां दृष्ट्या सूत्रकारो भिन्नो भाष्यकारश्च भिन्नोऽस्ति, तथाप्युमास्वातेः सूत्रकारत्वे न कस्यापि विरोधोऽस्ति। किन्तु सूत्राणामवतरणिकासु "वक्ष्यामि प्रवक्ष्यामि" इत्याद्युक्त्वा, तथा "गुणपर्यायवद् द्रव्यम्" (त० सू० अ० ५ सू० ३७) इति सूत्रस्य भाष्येऽपि "वक्ष्यामः" इत्युक्त्वा सूत्राणां प्रणयनात् निश्चयेनेदं प्रतीयते यत् सूत्रकारो यः स एव भाष्यकारोऽप्यस्तीति। अतो जन्मान्तरवादसम्बन्धे सूत्रभाष्ययोर्द्वयोरुद्धरणानीहोपन्यस्यन्ते—

"तिर्यग्योनीनाञ्च" (त० सू० अ० ३ सू० १८) इतिसूत्रस्य भाष्ये वाचकप्रवर उमास्वातिर्लिखति—"द्विविधा चैषां मनुष्यतिर्यग्योनिजानां स्थितिः भवस्थितिः कायस्थितिश्चेति"। भवस्थितिः सा कथ्यते यस्यां प्राणी मनुष्ययोनौ तिर्यग्योनौ वा समुत्पद्य कतिपयकालं यावत् सुखेन दुःखेन वा जीवतीति। किन्तु मरणोपरान्तं मनुष्यरूपे तिर्यग्रूपे वा वारं वारं निरन्तरोत्पत्तिः कायस्थितिरित्युच्यते।

"हिंसादिष्विहामुत्र चापायावद्यदर्शनम्" (त० सू० अ० ७ सू० ४) इति सूत्रे 'इह' शब्देन एतज्जन्मनो बोधो भवति, 'अमुत्र' शब्देन च जन्मान्तरस्य बोधो भवति।

पुनश्चाग्रेऽष्टमाध्यायस्य सप्तमे सूत्रे समागतस्य 'संसार'शब्दस्य भाष्य

उमास्वातिर्लिखति—अनादौ संसारे नरकतिर्यग्योनिमनुष्यामरभवग्रहणेषु चक्रवत् परिवर्तमानस्य जन्तोः सर्वे एव जन्तवः स्वजनाः परजना वा" इति। अत्र जीवस्यानेकयोनिषु चक्रवत् परिवर्तमानता (भ्रमणशीलता)-कथनेन तस्य वारं वारं जननमरणे सिध्यतः। इदमेव तत्त्वमग्रेतनस्य "अनित्याशरणसंसारैकत्वा..................अनुप्रेक्षा" (त० सू० अ० ८ सू० ७) इति सूत्रस्य भाष्ये वोधिदुर्लभत्वानुप्रेक्षाया व्याख्यानेनापि प्रतीयते।

"कृत्स्नकर्मक्षयो मोक्षः" (त० सू० अ० १० सू० ३) इति सूत्रभाष्ये पुनर्लिखति वाचकप्रवरः—तत्क्षयसमकालमेवौदरिकशरीरवियुक्तस्यास्य जन्मनः प्रहाणम्, हेत्वभावाच्चोत्तरस्याप्रादुर्भावः" इति। अस्येदं तात्पर्यमस्ति यत् समस्तकर्मणां क्षयेण जन्महेतोरभावादग्रे पुनर्जन्म नैव भविष्यतीति। परन्तु यस्य प्राणिनो जन्महेतवः कर्माणि न क्षीणानि तस्य तु पुनर्जन्म भविष्यत्येवेति। एवं हि निर्विवादमेतद् यज्जन्मान्तरवादो जैनदर्शनकाराणां भृशं सम्मतोऽस्तीति।



## पुनर्जन्मनि वौद्धमतम्

"अनेक जातिसंसारं सन्धाविस्सं अनिब्बिसम्।
गहकारकं गवेसन्तो दुक्खा जाति पुनप्पुनम्॥ इति।
(धम्मपद जरावग्गश्लोक ८)

अयमर्थः—शरीरनिर्मातारं गवेषयमाणोऽहमनेकजन्मसु निरर्थकमभ्रमम्। तद्धि पौनःपुन्येन जन्मात्यन्तमेव दुःखप्रदमस्ति।

"सो करोति दीपमत्तनो खिप्पं वायम पण्डितो भव।
निद्धन्तमलो अनङ्गणो न पुनर्जातिजरं उपेहसि"॥ इति

अस्यायमाशयः—अतस्त्वमात्मानमेव दीपं कुरु तथा तत्परतया ज्ञानवान् भव। ततस्त्वं मलरहितो पापरहितश्च भूत्वा पुनर्जन्म वार्धक्यं च न प्राप्स्यसीति।

"मिद्धी यदा होति महग्घसोच,
निद्दायिता सम्परिवत्तसायी।
महावरोहा व निवापपुट्ठो
पुनप्पुनं गब्भमुपैति मन्दो॥

अर्थात् यदा मनुष्यो निरुद्यमोऽधिकभोजी निद्रापरायणः शूकर इव पार्श्वात् पार्श्वान्तरविवर्तनपरस्तथा तत्सदृश एव सदा नितरामशुचिभूतस्तिष्ठति, स मनुष्यः पुनः पुनः गर्भे प्रविशतीति।

उपरितनास्त्रयोऽपि श्लोकाः स्वोपदेशावसरे भगवता बुद्धेन कथिता अभूवन्। एषु प्रथमे तृतीये च स्पष्टरूपेण पुनर्जन्मनः प्रतिपादनं कृतमास्ते। एवं द्वितीयश्लोकेन तु चित्तस्य नैर्मल्यदशायां पापराहित्यदशायामेव च पुनर्जन्मग्रहणान्मुक्तिप्राप्तेर्वार्ता कथिता तथागतेन। यथा च वैदिकसम्प्रदायेऽपि तत्त्वज्ञाने जात एव पुनर्जन्मपाशान्मुक्तिरङ्गीकृतेति।

बौद्धधर्मस्य जातकग्रन्थास्तु पुनर्जन्मसम्बद्धैः प्रमाणैः पूर्णाः प्राप्यन्ते। अतो नात्र सन्देहो यज्जन्मान्तरवादो बौद्धदर्शनस्यापि मान्यसिद्धान्तोऽस्तीति।



# पुनर्जन्मविषये भारतीयाधुनिकमनीषिणां विचाराः

## सद्गुरुः कबीरदासः

सद्गुरुकबीरदासस्य महतो जगदुपदेशकस्य पुनर्जन्मवादे सुदृढतराऽऽस्थाऽऽसीदिति यथाप्रसङ्गं समुद्घोषिताभिस्तदीयपद्यरचनाभिः क्वचिच्छब्दतः क्वचिच्चार्थतः प्रत्येतुं शक्यते। यथा—

भूला लोग कहैं घर मेरा।
नौ मन सूत अरुझि नहि सुरझै, जनम जनम का फेरा॥

(बीजक शब्द-८५)

अत्र जन्मजन्मान्तरतो लोकानामज्ञानं प्रवर्तमानमास्ति इति स्फुटं प्रतिपादयति सद्गुरुः।

यथा वा—

रस गगन गुफा में अझर झरे।
जुगन जुगन की तृषा बुझानी करम भरम अघ व्याधि हरै।
कहँहि कबीर सुनो भाई साधो! अमर होय कबहूँ न मरै॥

(शब्दावली)

अत्र ज्ञाने जाते अमरो (मुक्तो) भवति नरो, न तु सकृदपि मरणमनुभवति। अन्यथा तु वारं वारं जायमानो म्रियत इत्यभिव्यनक्ति सत्-कविः।

अपरं च—

रे मन नेकी करले, दो दिन का मेहमान रे मन,
रहटमाल पनघट में फिरता, आता जाता भरा औ रीता
जुगन जुगन तू मरता जीता, क्यों करता अभिमान रे॥

(शब्दावली)

अत्र पद्ये अरघट्टदृष्टान्तेन जीवस्य संसरणवर्णनं शब्दतोऽनादिकालाज्जननमरणप्रतिपादनं च जन्मान्तरवादे स्फुटोक्तिः सत्कवेः।

अन्यदपि—

कुमति कीच चेला भरा, गुरु ज्ञान जल होय।
जनम जनम का मोरचा, पलमें डारे धोय॥

(साखी)

इदं पद्यं, नेदानीन्तनमात्रक्लेशमलक्षालनाय गुरुज्ञानजलमुपयुज्यते, किन्तु जन्मजन्मान्तरीयक्लेशनाशायैवेति स्फुटं प्रमाणीभवति सद्गुरोः कबीरदासस्योक्तिविधयेत्यलं विस्तरेण।



## महाकविस्तुलसीदासः

आधुनिकजगतोऽद्वितीयो भाषाकविर्गोस्वामी तुलसीदासोऽपि यद्यपि न गीतोपनिषदादिवज्जन्मान्तरवादे स्वीयं कञ्चिदभिप्रायविशेषमुपन्यस्यति, तथापि प्रसङ्गादेव निजकाव्ये जन्मान्तरसिद्धान्तं स्फुटं समर्थयन्नस्तीति स्थाने स्थाने लक्ष्यते।

यथा—

नाना जन्म कर्म पुनि नाना। किये जोग जग तप मख दाना॥
सुधि मोहि नाथ जन्म बहुकेरी। शिवप्रसाद मति मोह न घेरी॥
हर गुरु निन्दक दादुर होई। जन्मसहस्र पाव तन सोई॥

(उ० का०)

आसु चतुष्पदीषु जन्मान्तराणि प्राणिनां भवन्तीति स्फुटमुदाहारि महाकविना।

जासु नाम सुमिरत एक बारा। उतरहि नर भव-सिन्धु अपारा॥

(अयो० का०)

भगत–भूमि–भूसुर–सुरभि, सुरहित लागि कृपाल।
करत चरित धरि मनुज-तनु, सुनत मिटहि भवजाल॥

(अ० का०)

सद्गुरु ग्यान विराग योग के। विबुध वैद भव भीम रोग के॥

(बा० का०)

भंजेउ राम आप भव-चापू । भव-भय भञ्जन नामप्रतापू ।।
(बा० का०)

आसु चतुष्पदीषु च महाकविप्रतिपादितानि भवसिन्धु-भवजाल-भवभये-तिपदानि जन्ममृत्युपरम्परामेवेङ्गयन्ति ।

विवसहुं जासु नाम नर कहहीं । जन्म अनेक रचित अघ टरहीं ।।
(बा० का०)

एतादृंशि पद्यानि गोस्वामितुलसीदासस्य स्फुटप्रमाणानि सन्ति जन्मान्तरवादे तस्य महाकवेर्दृढतरविश्वास इति को नाम जनो न प्रतीयात् ।

यद्यपि वैदिकत्वादेवैषां सन्तकवीनां वचनोद्धरणानि गतार्थानि सन्ति प्रसङ्गेऽस्मिन् न पृथगुन्यासमर्हन्ति, तथापि लोकानां सत्कर्मसु प्रवंतनाय स्वोपदेशवचनेषु पुनर्जन्म प्रति दाढर्याभिव्यक्तिर्लोकप्रबोधनाय ज्ञात्वा बुद्ध्वैव तैः कृतेति मन्यामहे ।



## गुरुनानकः

स ईश्वरो निर्भयस्तथा शत्रुतारहितोऽस्तीति निरूपयन्नाह गुरुनानकः—
"तस्मादीश्वरादेव भीतः समीरश्चलति तथा (पौर्वात्यादि) वायवो वहन्ति, शतसहस्रनद्यस्तत एव भीताः सत्यः स्रवन्ति, धरणी तस्मादेव भयाज्जगद्-भारमुद्वहति, वारिदोऽपि वारिभारमुद्वहँस्तत एव भयाद् वियति समुड्डी-यते । सूर्यचन्द्रमसौ तस्मादेव भयाल्लक्षाधिकमीला (अर्धक्रोशा) नामनन्तपथे धावन्तौ निरन्तरं चलतस्तराम् । जीवसमूहानां संसारे गमनागमने तत एव भयात् कारणाद् भवतः । ……………किन्तु स्वयं सत्पुरुष एवैकमात्रं निर्भयोऽस्ति ।"

छायानुवादः ( वार राग आसा, श्लोक, पउड़ी-४ )

"आत्मा नो म्रियते, नो तरति, न वा जले निमज्जति (ब्रूडति) । स्वातीतसंस्कारैः प्रभावितः स निजसामर्थ्यानुसारेण कर्म कुर्वाणस्तथेश्वरेच्छया (संसारे) आयाति याति च ।"

छायानुवादः (गउड़ी २ : २)

गुरुनानकमतानुसारेण मोक्षः, पुनर्जन्मनो मुक्तिर्वा सत्कर्मभिः सहैव परमेश्वरस्य स्वानुकम्पाद्वाराऽपि संभविनी। तदुक्तं तेन—

पुनी पापी आखणु नाहिं। करि करि करणी लिखिलै जाहु।
आपे बीजि आपे हि खाऊ। नानक हुकमी आवहु जाहु॥

अत्र 'आवहु जाहु' इति पदाभ्यां गमनागमने = पुनर्जन्ममरणे समसूचिषातां गुरुनानकसाहबेन। इत्थञ्चेमानि गुरुनानकस्य वचनानि जन्मान्तरसिद्धान्ते तस्य दृढास्थामभिव्यञ्जयन्ति वर्तन्त इति नात्राणुरप्यस्ति विचिकित्सा।



## स्वामी दयानन्दसरस्वती

भारत आर्यसमाजसंस्थापकानां स्वामिदयानन्दसरस्वतीनां जन्मान्तरसम्बन्धिमन्तव्यानि तेषामेव शब्दैः संस्कृतच्छायाभिः समुध्रियन्ते—

प्रश्नः—

जीवा मुक्तिमधिगत्य पुनर्जन्ममरणात्मके दुःखे कदाचिदायान्ति न वा? यतो हि "न च पुनरावर्तते न च पुनरावर्तते" (छा० उ० प्र० ८ खं० १५), "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" (शारीरकसूत्रम्-अ० ४ पा० ४ सू० २२), "यद् गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्यादिवचनेभ्यो विदितं भवति यत् सैव मुक्तिरस्ति, यतो बन्धनिवृत्तौ सत्यां पुनः संसारे कदाऽपि नायातीति।

उत्तरम्—

उपर्युक्तकथनं (यन्नायातीति) युक्तं नास्ति, यतो वेदे एतदुक्तेर्निषेधः कृतोऽस्ति।

यथा—

अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम।
स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च॥
(ऋ० म० १ सू० २४ मं० २)

अर्थात् वयमस्य स्वप्रकाशस्वरूपस्यानादेः सदामुक्तस्य परमात्मनो नाम पवित्रं जानीमहि, योऽस्मान् मुक्तावानन्दं भोजयित्वा पृथिव्यां पुनर्मातृपितृसम्बन्धे जन्म दत्त्वा मातापित्रोर्दर्शनं कारयतीति।

यथेदानीं बद्धमुक्ता जीवाः सन्ति, तथैव सर्वदा भवन्ति, अत्यन्तविच्छेदस्तु बन्धमुक्त्योर्न कदापि भवति, किन्तु बन्धो मुक्तिश्च सदा न तिष्ठत इति।

प्रश्नः—(मानवस्य) जन्म एकं भवत्यनेकं वा ?

उत्तरम्—अनेकम्।

प्रश्नः—यद्यनेकं, तर्हि पूर्वजन्ममृत्त्वोर्वृत्तान्ताः कथं न स्मर्यन्ते ?

उत्तरम्—जीवोऽल्पज्ञोऽस्ति त्रिकालदर्शी नास्ति, नातस्तेषां स्मरणं जायते।

प्रश्नः—मुक्तिरेकस्मिञ्जन्मनि भवत्यनेकेषु जन्मसु वा ?

उत्तरम्—अनेकेषु जन्मसु भवति।

एतन्मते मुक्तो जीवो मुक्तौ (ब्रह्मलोकं) प्राप्तो ब्रह्मण्यानन्दं तावत्कालपर्यन्तं भुक्त्वा पुनर्महाकल्पात् पश्चान्मुक्तिसुखं परित्यज्य संसार आयाति। अर्थाज्जीवः सदाकृते मुक्तो न कदापि भवतीति दयानन्दस्वामिनां मतम्।

अत्र मुक्तिसम्बन्धे योऽपि मतभेदो भवतु, तत्र युक्तत्वमयुक्तत्वं वा यदपि भवतु, किन्तु कर्मानुसारिजन्मान्तरसम्बन्धे स्वामी दयानन्दसरस्वत्यपि इतरवादिभिः सममेवैकमतोऽस्ति। मम लक्ष्यमप्येतावदेव दर्शयितुमस्ति।



## स्वामी विवेकानन्दः—

श्रीरामकृष्णपरमहंसशिष्याणामाधुनिकविश्वसमक्षं भारतीयोदात्तवैदिकदर्शनानामप्रतिमव्याख्यातॄणां श्रीविवेकानन्दस्वामिनां जन्मान्तरसम्बन्धिनो विचाराः संस्कृतगिराऽनूदितेभ्यस्तदीयप्रवचनेभ्यः समुध्रियन्ते—

"यदा शुभकर्मद्वारा तस्य समस्तपापानां दुष्कर्मणाञ्च नाशः सम्पद्यते, तदा जीवः पुनः शुद्धिमापद्यते। तथा चैवंप्रकारेण शुद्धो भूत्वा स देवयानमाप्नोति। इयं पृथिवी भूलोकोऽस्ति, ततः परः सूर्यलोको विद्यते, ततोऽपि परो विद्युल्लोकोऽस्ति, विद्युल्लोकतोऽपि परमोच्चलोको ब्रह्मलोकनामाऽस्ति। तत्र गतो जीवो नित्यनिवासं करोति, तथा पुनर्जन्म वा मरणं वा न प्राप्तो भवति।

[विवेकानन्द साहित्य : दार्शनिक चिन्तन के सोपान पृ. २३३]

"यावत्त्वयि 'अहं शरीरमस्मि' इत्येवंविधः स्वप्नः स्थितोऽस्ति, तावत्त्वं स्वं जन्मग्रहणशीलमेव मरणशीलमेव च प्राप्स्यसि।"

"अयं मानवात्मा निरन्तरं देहाद् देहान्तरं संक्रमतेतराम्। प्रवाहेऽस्मिन् न ज्ञायते, स कियत्सु भिन्न-भिन्नरूपेषु व्यक्तोऽभूद् भविष्यति चाग्रे। आध्यात्मिकविकाससम्बन्धिनस्तस्य महतो नियमस्यानुसारेण निरन्तरं सोऽधिकाधिकमभिव्यक्तो बोभवीति। किन्तु यदा स मानवात्मा कार्त्स्न्येनाभिव्यक्तो भविष्यति, तदा तस्मिन् पुनरधिकः परिणामो(जन्ममरणरूपो) न भविष्यति।

[विवेकानन्द साहित्य : भारतीय आध्यात्मिक चिन्ताधार पृ. २५४]

"अस्मिन् संसारे प्रत्येकं नवजातशिशुरात्मना सह निजपूर्वजन्मनां सञ्चितमनुभवमादाय समायाति, तथास्यानुभवस्य चिह्नं तस्य मनसि देहसंरचनायां च दृष्टिगोचरं भवति।"

[विवेकानन्द साहित्य : भारतीय आध्यात्मिक चिन्ताधार पृ० २५६]

"यद्यहं स्वयं स्वभाग्यनिर्माता न भवामि, तदाऽहं स्वतन्त्रो नास्मि। अस्या निजास्तित्वदुर्गतेर्दायित्वहं स्वोपरि स्वीकरोमि कथयामि च यत् पूर्वजन्मनि मया यद्दुष्कृतं कृतं तस्याहं प्रतिकारं करिष्यामि। इदमेव मदीयात्मनः पुनर्जन्मनो दर्शनमस्ति। वयमस्मिन् जीवने प्राक्तनजीवनस्यानुभवमादाय समायामस्तथैतज्जीवनस्य मम सौभाग्यदौर्भाग्ये मम कर्मणां फले भवतः। एवं वयं निरन्तरं श्रेष्ठश्रेष्ठतराः सम्पद्यामहे, अन्ततश्च पूर्णतामधिगच्छामः।"

[वि० सा० : हिन्दूधर्म पृ० २६०]

"जन्मग्रहणं, भोजनपानं, ततो मरणमिति जीवनस्यायं क्रमो न जाने कियतो वारान् आगमिष्यति गमिष्यति चेति।"

[वि० सा० : आत्मा उसके बन्धन तथा मुक्ति पृ० २२१]

"यदा जीवात्मा परिस्थितीनां संघर्षात्मकमाभिमुख्यमाचरन् मृत्युं प्राप्तो भवति, यदा चैवं मार्गे तस्य सहस्रवारं मृत्यौ जातेऽपि स निर्भीकतया संघर्षं कुर्वाणोऽग्रे वर्धते, वर्धत एव च पुनः, तदा स महान् शक्तिसम्पन्नः सम्पद्यते, तथा तस्यादर्शस्योपरि अन्तर्हसति, यदर्थमसाविदानीं पर्यन्तमपि संघर्षं कुर्वन्नासीत्। यतस्सोऽवाप्तबोधो भवति यदसौ स्वयं तस्मादादर्शाद् भूयान् श्रेष्ठोऽस्तीति।"

विवेकानन्दस्वामिनामेत उपदेशा नूनं कस्याप्यन्तःकरणे जन्मान्तरवादं प्रति दृढ़ामास्थां जनयितुमलं वर्तन्त इति नास्ति सन्देहः।



## महामना मदनमोहनमालवीयः

महत्तरभारतस्य प्रतीकभूताः सार्वभौमहिन्दूसंस्कृतेरप्रतिमव्याख्याक-तारो धर्मराजनीत्योः सामञ्जस्यमूर्तयो महामनसो मदनमोहनमालवीयमहाभागा राजनीतिधुरन्धरा अपि धर्मनेतारः शिक्षाविदोऽपि समाजसुधारैकव्रता वैदिकपरम्परासु दृढास्थावन्त आसन्। जन्मान्तरसम्बन्धिनस्तेषां विचारा नूनं जनमानसार्वजनाय भवेयुरिति त उपन्यस्यन्ते। "पशु बलिदान एवं देवी पूजा" शीर्षकनिबन्धे तैरुपदिष्टम्—

स्वर्गकामोऽश्वमेधैर्यः करोति नियमाज्ञया।
तद्भोगान्ते पतेद्भूयः स जन्मनि भवार्णवे॥

अत्र भूयो जन्मनि स भवार्णवे पतेदिति तदीयोपदेशस्तेषां पुनर्जन्म प्रति दृढामास्थामास्थापयति।

एवम्—

वहूनां जन्मनामन्ते मयि भावोऽनुवर्तते।
प्राणिनां सर्वभावेन जन्माभ्यासेन भो यम!
तस्मात् सुकृतिनः सर्वे येषां भावोऽनुवर्तते।
जन्मजन्मानुवृत्तानां विस्मयं नैव कारयेत्॥

स्त्रीबालशूद्राः श्वपचाधमाश्च प्राग्जन्मसंस्कारवशाद्धि धर्म!
योनिं गताः पापिषु वर्तमानास्तथापि शुद्धा मनुजा भवन्ति॥

(स्क० पु० माहेशखण्डः)

पुनश्च—

अनेकजन्मपुण्यौघैर्दीक्षितो जायते नरः।
तथाप्यनेकपुण्येन शिवविष्णुपरायणः॥ (रुद्रयामलः)
ब्रह्मज्ञानात् परं प्राप्य पुनर्जन्म न विद्यते।

(स्क० पु० नागरखण्डः)

उपर्युक्ताः स्कन्दपुराणश्लोका रुद्रयामलश्लोकश्च श्रीमालवीयमहोदयैः स्वीये "अन्त्यजोद्धार विधि" नामके लेखे समुद्धृताः सन्ति। ते च श्लोकाः कर्मपुनर्जन्मनोर्निमित्तनैमित्तकभावमविरललग्नमावेदयन्ति। ब्रह्मज्ञानात् परपदप्राप्तौ सत्यामेव पुनर्जन्मपरम्परातो मुक्तिमधिगच्छति मानव इति च दृढामास्थां श्रीमालवीयमहोदयानामभिव्यञ्जयन्ति।



## महात्मा गान्धी

"शरीरत्यागानन्तरमात्मा किं करोतीति सर्वथैव हि एकोऽनुमानस्यैव विषयोऽस्ति। तथापीदं निश्चितमस्ति यदाऽऽत्मा शरीरेण सह नैव नाशमाप्नोति। शेषविषयाणां कृते तु वयं भगवतः प्रकृतेर्वा नियमेष्वायतेमहीति।"
(काका कालेलकरं प्रति गान्धिमहात्मना लिखितस्य पत्रस्य संस्कृतच्छाया)

"मनुष्यः पशुनास्ति। पशुयोनिष्वगणितजन्मग्रहणानन्तरं स तन्मनुष्यपदं प्राप्तवानस्ति। तस्य जन्म शिर उन्नमय्य चलितुमस्ति, न तु शायं शायवस्थानायोदरभरेण सर्पणाय वा वर्तते" इति।

(कुत्सित जीवन और दाम्पत्यविमर्श इति पुस्तकस्य संस्कृतच्छाया संस्करण ३ पृ० ६६)

"यावान् मम विश्वासोऽस्य शरीरस्यास्तित्वेऽस्ति, तावानेव पुनर्जन्मन्यप्यस्ति। अतोऽहं जानामि यदल्पीयानपि प्रयत्नो व्यर्थो नैव जायते" इति।
(कु. जी० और दा. वि० पृ० १००)



## पण्डित जवाहरलालनेहरूः

"चन्द्रः, यो हि कारागारे सदैव मम सङ्गी अभूत्, निकटपरिचयकारणान्मया सहातिशयेनात्मीयतां गतोऽस्ति। अयं मां स्मारयति जगतः सौन्दर्यम्, जीवनसागरस्योद्बेलावबेलताम्, तथैतां वस्तुस्थितिं यदन्धकारानन्तरं प्रकाश आयाति, मृत्युः पुनर्जीवनञ्चान्योन्यस्मादनन्तरमनन्तक्रमेण प्रचलती बोभूत इति।"

('हिन्दुस्तान की कहानी' इति पुस्तकांशस्य संस्कृतच्छाया, पृ० ३)
स्वतन्त्रतासङ्ग्रामावधौ कारागारतः पण्डितनेहरूक्तिरियमतिस्पष्टं तस्य पुनर्जन्मन्यास्थामभिव्यनक्ति।



## योगी अरविन्दघोषः

"and hark ! Their silence Turns The Wheels of life"
(कविताञ्जलिः, कविता सं. १०)

अस्याः कवितायाः संस्कृतानुवादः, वि. वि. कपालिशास्त्रिणां शब्देषु—

**स्पन्दलेशविरहं महदेषां भूयसां बलवतामुरुमौनम् ।**
**हन्त भोः ! शृणुत जीवितचक्रावर्तमत्र वितनोति नितान्तम् ॥**
इति ।

अर्थात् तस्य निष्पन्दं गभीरमौनं जीवनचक्रं परिवर्तयतितराम् ।

"and climb from death To a diviner birth grasped and supported immortal will"

संस्कृतानुवादः श्रीशास्त्रिशब्देषु—

**सनातनाक्षयेच्छाया ग्रहणाद् धारणादपि ।**
**जन्म दिव्यतरं भव्यं समारोढुं च मृत्युतः ॥**
**सोऽयमत्र समायातः निःसीमस्थः प्रदेशतः ॥** इति ।

अर्थात् सोऽयमक्षयेच्छाशक्त्या मृत्योरनन्तरमतिदिव्यं भव्यं च जन्माधिगन्तुं निरवधिप्रदेशादिह लोक आगतोऽस्ति ।

"यः पूर्वजन्मवादश्चिरकालं यावदार्यधर्मस्य योगलब्धज्ञानस्यैकोऽङ्गविशेषोऽभूत्, तस्यैव प्रतिष्ठा पाश्चात्यविद्याप्रभावात् शिक्षितसम्प्रदाये नष्टप्राया जाताऽऽसीत्, तथा श्रीरामकृष्णलीलाया अनन्तरं वेदान्तशिक्षायाः प्रचारेण गीताध्ययनप्रवर्तनेन च तदेव सत्यं पुनः प्रस्थापितं जायमानमस्ति । स्थूले जगति यथा पैतृकगुणानुवृत्तिः (heridity) एकं प्रधानसत्यमस्ति, तथैव सूक्ष्मजगति पूर्वजन्मवाद एकं प्रधानं सत्यमस्ति । श्रीकृष्णस्योक्ताविदं द्वयमपि निहितमस्ति । यथा—

शुचीनां श्रीमतां गेहे, योगभ्रष्टोऽभिजायते (भ. गी. ६।४१)
अथवा योगिनामेव कुले भवति धीमताम् (भ० गी० ६।४२)

अर्थात् शुद्धानां श्रीमतां पुरुषाणां गृहे जन्मना शुद्धं सबलं शरीरमुत्पादयितुं सम्भाव्यते, योगिकुले च जन्मग्रहणेनोत्कृष्टं मनः प्राणश्च संघटेते, तथा तथाविधे एव शिक्षा मानसिकी गतिश्च प्राप्ते भवतः" इति ।

('नवजन्म, धर्म और जातीयता, पुस्तकस्य संस्कृतच्छाया)

"पुनर्जन्मसम्बन्धे भ्रान्तलोकस्य या सामान्यधारणा वर्तते, तस्यास्त्वया कदापि प्रश्रयो नैव दातव्यः । लोकानां सामान्यधारणेयं वर्तते यद् 'अहोबल' पण्डित एव 'जगेश्वर' मिश्ररूपेण पुनः जन्म गृहीतवानस्तीति । अयं सर्वथा स एव मनुष्योऽस्ति । तस्य व्यक्तित्वं, स्वभावो, गुणो, गरिमा वा यत्किञ्चित्

पूर्वंजीवन आसीद्, वस्तुगत्या तदेवास्मिन्नपि जन्मनि वर्तते। अन्तरं केवलमेतावदेवास्ति यत् पूर्वंजन्मनि स शिरसि एकां बृहतीमुष्णीषं बध्नाति स्म, किन्त्विदानीं द्विफलिकां टोपिकां ददाति। पूर्वं संस्कृतभाषायां वार्तालापं करोति स्म, इदानीन्तु साधारणहिन्दीं वदति। परन्तु स्थितिर्नैवमस्ति। ............जीवो जन्म गृह्णात्यनुभवाय, स्वाभिवृद्धये, स्वक्रमिकविकासाय, यस्मिन् सोऽन्तेऽस्माज्जडतत्त्वादुपरि भगवते आरार्तिक्यमवतारयेत्। अयमेव केन्द्रीयः पुरुषो जन्म गृह्णाति, न पुनः किमपि बाह्यव्यक्तित्वं जन्म गृह्णाति। बाह्यव्यक्तित्वन्तु केवलमेकं मूषामात्रमस्ति, यच्च केन्द्रीयपुरुषो निजैकजीवनस्यानुभवान् रूपान्वितान् विधातुं निर्मिमीते।...............मन्यतां, वीरकवेः वर्जिलस्य पुनर्जन्माभूत्............किन्तु कस्मिंश्चिज्जन्मान्तरे इदं भवितुमर्हति यत् स कविर्न प्रादुर्भवेत् प्रत्युतैको दार्शनिको योगी च भवेत्, तथोच्चतमसत्यं प्राप्तुं स्वजीवनेऽभिव्यञ्जयितुं च प्रयस्येत्।

संस्कृतच्छाया ('इस जगत की पहेली' पृ० ८४)

पुनर्जन्मसम्बन्धेऽरविन्दस्य विचारास्तदीये "पुनर्जन्म और क्रमिकविकास" नाम्नि पुस्तके विस्तरेण मिलन्ति, यानिह संस्कृतच्छाययोद्धर्तुमत्यन्तमुपयुक्तं मन्ये। यथा—

यूरोपे पूर्वकाले पुनर्जन्म ट्रांसमाइग्रेसन (देहान्तरण) इति कथयन्ति स्म। आधुनिकं विज्ञानमन्तरात्मविषये न जानाति न वा ज्ञातुं शक्नोति। तस्य क्षेत्रं मांसमस्तिष्कस्नायुभ्रूणानां रचनासु तेषां विकासे च सीमितमस्ति। आधुनिकी ह्यालोचना भौतिकप्रदेशाद् बहिर्निःसहायेव वर्तते।

पुनर्जन्म त्वेतत्स्वरूपे दृष्ट्वा यत् तदाध्यात्मिकविकासक्रमायैकोऽवसरः साधनञ्च वर्तते, सर्वमपूरितं स्थलं पूरितं सम्पद्यते। पुनर्जन्मसम्बधिनीयं दृष्टिर्जीवनं यान्त्रिकस्य पुनरावर्तनस्य स्थानेऽर्थपूर्णम् (सप्रयोजनम्) आरोहणात्मकं विदधाति। इयं दृष्टिरस्मत्समक्षं विकासमनुभवतोऽन्तरात्मनो दिव्यान् प्रदेशानुन्मेषयति। इयं विभिन्नान् लोकान् आध्यात्मिकस्यात्मविस्तरणस्य शृङ्खलामिव विदधाति। इयञ्च जनानात्मज्ञानस्यान्वेषणे नियोजयति, तथा सर्वेभ्योऽधुनैव पश्चाद् वा एकां महतीं प्राप्तिं प्रतिजानाति (प्रत्याश्वासं ददाति)।

एकस्य जन्मनः सम्बन्धाः पश्चात्तनेषु जन्मसु स्थिरास्तिष्ठन्तीति संभावना च प्रबलासक्तेरुपरि निर्भरा भवति। यद्यप्येवं संभवस्त्वस्ति, किन्तु नियमो

नास्ति। नियमस्त्वयमस्ति यत् स एव सम्बन्धः पुनरावर्तितो न भविष्यतीति। पृथिव्यां त एव जना विभिन्नजीवनेषु वारं वारं मिलन्ति, किन्तु सम्बन्धा भिन्ना भवन्ति। यदि नाम तदेव व्यक्तित्वं तैरेव सम्बन्धैस्तैरेवानुभवैश्चावर्त्येत तदा पुनर्जन्मोद्देश्यमेव पूर्णं न स्यात्।

प्रतिवारमन्तरात्मा जन्म गृह्णाति प्रतिवारं च विश्वप्रकृतेरुपादानैरेकस्य मनसः प्राणस्य शरीरस्य च रचना भवति। इयञ्च रचनाऽन्तरात्मनो भूतकालिकविकासस्यानुसारेण तदीयभविष्यदावश्यकतानुसारेण च भवति।

जीवश्चैत्यलोके साक्षादपि गन्तुं शक्नोति, किन्त्वेतत् प्रयाणकालिक्याश्चेतनायाः स्थितावायतते।

"अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥

(गी० अ० ८ श्लो० ५)

अन्तरात्मा हि अनुभवाय जन्म गृह्णाति। यावत् स भगवन्तं जडतत्त्वस्यान्तर्नावतारयति तावत्कालमग्रे वर्धनाय क्रमशः स्वविकसितत्वाय च पार्थिवजीवनमङ्गीकरोति। वस्तुगत्या शरीरस्य धारयिता केन्द्रीयपुरुषोऽन्तरात्मास्ति, न तु किमपि बाह्यव्यक्तित्वम्।" इति

संस्कृतच्छाया [ 'पुनर्जन्म और क्रमिक विकास' पृ० १९७ ]

"निःसन्देहं पुनर्जन्म भवति, परन्त्वेतत् स्थापयितुं यद् 'अमुकेनामुकरूपे पुनरपि जन्म गृहीतम्' गभीरतमाया अनुभूतेरावश्यकता भवति। केवलं मनःप्रत्ययात् कार्यं न चलितुमर्हति, यतो हि तत् सारल्येन त्रुटिं कर्तुं शक्नोति।"

संस्कृतच्छाया ( 'पुनर्जन्म और क्रमिक विकास' पृ० २०४ )

"मृत्युः केवलं शरीरपरित्यागोऽस्ति, न तु व्यक्तिगतास्तित्वस्य लोपरूपः। यदा कश्चिद् देशान्तरे गच्छति तथा तत्रत्यजलवाय्वानुकूल्येन वस्त्राणि परिवर्तयति तदा स मृतो नो घोष्यते।"

सं० छा० ( 'पु० क्र० वि०' पृ० २११ )

"वेदेषूच्चतरलोकसत्त्वानां ज्योतिर्मयशरीरस्य चर्चा कृता विद्यते। पौरस्त्यपाश्चात्यानां कतिपययौगिकसिद्धान्तानामियं मान्यताऽस्ति यदन्तिम-

रूपान्तरणस्य स्थितावागतायामस्मिन् धरातलेऽपि मनुष्यस्तैरेव गुणैर्युक्तस्य शरीरस्य विकासं करिष्यतीति। इदं शरीरं तेजोमयशरीरनाम्ना प्रोच्यते।"

सं० छा० ('पु० क्र० वि०' पृ० २२१)

वैज्ञानिक (विकासवाद) सिद्धान्तानुसारेण मानवप्राणी पशुस्वरूपात् प्रारभ्य वन्यमानवस्यावस्थातो विकसितो भवन्नाधुनिकविकसितसभ्यमानवस्योत्कृष्टतामधिगतवानस्तीति। किन्तु भारतीयं मतं ततो भिन्नमस्ति। एतदनुसारमीश्वरेण जगतः सृष्टिरेकस्माद् बहूनां विकासद्वारा तथाऽऽध्यात्मिकतायाःसकाशाद् भौतिकस्य विकासद्वारा कृतास्ति। प्रारम्भे कारणरूपेणायोजनं सूक्ष्मरूपेण विकासस्तदुपरान्तं भौतिकस्थूललोकरूपेणाभिव्यक्तिश्चेति ईश्वरीयसृष्टिक्रमः। अर्थात् कारणात् सूक्ष्मं, सूक्ष्मात् स्थूलं, ततः प्रतिलोमक्रमेण पुनः कारणे पर्यवसानमिति रहस्यभूतं सूत्रमस्ति।" इति।

उपर्युक्ता उद्‌गाराः परमाध्यात्मिकयोगिनोऽरविन्दस्याञ्जस्येन जनमानसमावर्जयन्ति, तथा जन्मान्तरवादसम्बन्धे न केवलं विश्वासमुत्पादयन्ति प्रत्युतात्मनि परमात्मावतारणायावसररूपं साधनरूपं च जन्मग्रहणमिति प्रत्याययन्ति।



## रवीन्द्रनाथठाकुरः

"परमात्मन्! त्वयाऽहमविरामयात्री विहितः। ममेदं भङ्गुपात्रं वारं वारं रिक्तीकरोषि तथा प्रतिवारं पुनर्नवजीवनरसेन तत् पूरयसि च। त्वमिमां वंशनिर्मितां लघ्वीं वंशीं पर्वतिकासूपत्यकासु चादाय नित्यनवीनं सङ्गीतध्वनिं कृतवानसि। ममास्यां क्षुद्रझोलिकायां त्वमबाधगत्योपहारसमर्पयसितराम्। युगानि व्यतीतानि भवन्ति, परं गतिरियमनवरुद्‌धैव निरन्तरं प्रवर्तते। किन्त्वधुनाऽपि झोलिकेयं रिक्तैव वर्तत इति"।

संस्कृतच्छाया (गीताञ्जलिः, गीत सं० १)

"त्वं मां तैर्मित्रैः सह परिचयमकारयो यानहं नैव जानामि स्म। त्वं मां तेषु गृहेष्वावासयो ये मम नासन्। त्वया दूरमपि निकटे कृतं, तथाऽन्यदीया अपि मम भ्रातरः कृताः। यदा मया निजपरिचितं स्थानं बाध्यतया त्यक्तव्यमापतति, तदा मम हृदयं व्याकुलं जायते। तदाहं विस्मरामि, यन्नवेऽपि पुराणं विद्यमानं भवति, तथा तत्र त्वमप्यसि।

ममाविरामयात्रिण एकाकिसङ्गिन् ? अस्मिन् लोके लोकान्तरेषु वा जीवनमृत्युभ्यां यत्र कुत्रापि नयसि, तत्रापरिचितैः सह मम हृदयमानन्दबन्धनैर्योजयसि।"

सं० छा० (गीताञ्जलिः, गीत सं० ६३)

"दिवसा आयान्ति, युगानि व्यतियन्ति। किन्त्वयं नित्यं स एवास्ति, यो मम हृदयमनेकनामरूपेषु हर्षशोकयोरनेकोद्वेगेषु च भ्रामयति।"

सं० छा० (गीता० गी० सं० ७२)

"त्वं मदीयमिदं मृत्पात्रमाकण्ठमनेकरागाभिः सुगन्धिभिश्च मदिराभिः सदैव पूरयसितमाम्। ममायं संसारो निजान् शतशो दीपान् तव ज्योतिषा प्रज्वालयिष्यति तव मन्दिरवेदिषु च तानर्पयिष्यतीति"

सं० छा० (गी० गी० सं० ७३)

विश्वकवे रवीन्द्रनाथस्येमानि गीतानि नूनं पुनर्जन्मपरम्परां स्पष्टरूपेण प्रतिपादयन्ति सन्तीति प्रत्येष्यन्ति सचेतसः।



## सर राधाकृष्णन्

"The emergent view of the self makes the hypothesis of rebirth a reasonable one. Throughout nature life is preserved and continued through incessant renewal. Life is a perpetual going on, never resting, always straning forward for something that has not been but, should be. While at the zoological level perpetuation of the species is the end, at the human level development of unique individuality seems to be the end in view ..."like corn the mortal growes, like corn is born again." (कठोपनिषद्) They ( humanselves ) carry on past threads, weave out something in the present and prepare for the future."

( An Idelist View of Life, Chapter VII Page 287 )

अर्थात् "आत्मसम्बन्धी विचार एव पुनर्जन्मसिद्धान्तं तर्कसंगतं विधत्ते। प्रकृतौ जीवनस्य रक्षणं विकासश्च निरन्तराभिर्नवीनताभिरेव भवतः।

निरन्तरविकास एव जीवनमस्ति, यत् कदाचिदपि विश्रामं न लभते, तथा सर्वदैव केषांश्चिदेतादृशां वस्तूनां कृतेऽग्रेसरं भवति, यानि वस्तूनीदानीं यावदप्राप्तानि सन्ति, किन्त्ववश्यं तानि प्राप्तव्यानि सन्ति। यत्र जीवसम्बन्धिनि धरातले जातेः शाश्वतिकत्वं लक्ष्यभूतमस्ति, तत्र मानवीयस्तरे वैयक्तिकताया विकासोऽपि लक्ष्यभूतोऽस्ति। ........."सस्यमिव मर्त्यः पच्यते, सस्यमिवाजायते पुनः।" ( कठोपनिषद् १-६ )। मानवीयात्मानोऽतीतानि कानिचित् सूत्राणि वहन्ति, वर्तमाने तैः सूत्रैः किञ्चिद् वस्त्रमिव वयन्ति तथा भविष्यदर्थमुद्युज्यन्ते च'' इति।

आत्मा वैयक्तिकताया विकासाय कार्यपूर्तये वा सततं प्रयतते। स गाम्भीर्ये, ऐश्वर्ये, प्रसारे चानन्ततामधिगन्तुं शक्नोति। आत्मनः शाश्वततां निर्दिशन् डा० राधाकृष्णन् महोदयोऽग्रे कथयति—

> "We can not in one life exercise all the powers, we possess or exhaust all the values, we strain ofter. The capacity of the self for endless improvement, and the pervasive facts of continuance point to a future where the self's "withheld completions" obtain a chance."

अर्थात् "वयं तासां सर्वासां शक्तीनां, या वयं धारयामः, उपयोगं नैकस्मिन् जन्मनि कर्तुं शक्नुमः, न वा तेषां समस्तमूल्यानां व्ययमपि सम्पादयामो, यदर्थं वयं प्रयतामहे। अनन्तविकासायात्मनः क्षमताया गतिशीलतायाश्च सार्वभौमसत्यता एकस्यास्तादृश्या भविष्यत्ताया अभिमुखं संकेतं करोति, यत्रात्मनोऽवरुद्धपूर्णता (Withheld completion) स्वावसरं लभत" इति।

वर्तमानजगतोऽद्वितीयभारतीयदार्शनिकस्य डा० राधाकृष्णन्महोदस्योपर्युक्ता विचारा जन्मान्तरवादस्य सबलसमर्थकाः सन्तीति।



## महामनीषी गोपीनाथकविराजः

"मा ज्ञासीः, मृत्युरेव जीवनस्य सीमास्ति तथा तदूर्ध्वं न किञ्चिदस्तीति। मृत्युरवश्यं परिवर्तनमानयति, परन्तु तत्परिवर्तनं न जीवस्य व्यक्तिगतचरित्रस्य स्वभावस्य चामूलविनाशमामूलपरिवर्तनं वा कर्तुं शक्नोति। प्रत्येक-

मात्मा स्वपार्थिवजीवने कृतानां कर्मणामनुसारेण विचारान् लभते तथा सर्वेषां स्वकृतकर्मणां फलानि भुङ्क्ते। पुण्यकार्याणि कृत्वा ब्रह्मलोक-निवासं करोति।"

संस्कृतच्छाया ['मनीषी की लोकयात्रा' पृ० ४२०]

कविराजमहाभागानामियमुक्तिर्जीवस्य व्यक्तिगतचरित्रस्वभावयोर्मृत्युतः समूलोच्छेदनिषेधं कर्मफलभोगनियमं च निर्दिशन्ती भङ्ग्यन्तरेण जन्मान्तर-वादं स्फुटं समर्थयति।

पुनश्च—"सामान्यतो मृत्योरनन्तरमयं जीवः स्वदेहकोषान्निर्गत्य स्व-कर्मानुसारेणाधोगतिमूर्ध्वगतिं तिर्यग्गतिं वा प्राप्नोति। अस्मिन्नेव गतिक्रमे-ऽस्य भोगस्तत्तद्भुवनेषु सम्पन्नो भवति। तदनन्तरमवशिष्टकर्मफलं भोक्तुं तत्कर्मानुरूपं देहमाश्रयितुं बाध्यो भवति। एतदर्थं मातृगर्भे प्रवेश आवश्यको भवति। अस्यैव नाम संसार इत्यस्ति।"

संस्कृतच्छाया [ 'मनीषी की लोकयात्रा' पृ० ३८१ ]

आभिरुक्तिभिः पुनर्जन्मसिद्धान्तं शब्दतो निरूपयन्तः कविराजमहाभागा अग्रे कथङ्कारं चिदणोर्जीवस्य जन्ममृत्युपरम्परातो मुक्तिर्भवतीति निरूपण-प्रसङ्गे सालोक्य-सारूप्य-सार्ष्टि-सामीप्य-सायुज्यरूपाणां मुक्तिभेदानामधिगम-प्रकारान् प्रतिपादयन्ति। यथा—

"परन्तु सद्गुरोर्दीक्षाप्रभावादुपासकात्मनि कस्याश्चिद् विलक्षणायाः शक्तेः सञ्चारो भवति। इयं हि गुरुदत्ता शक्तिरस्ति, या तदीयकर्मभिः सर्वथा-ऽसम्बद्धा भवति। उदाहरणार्थम्—सद्गुरुरुपासकस्याधिकारानुसारं तस्मिन् विष्णुशक्तिं सञ्चारितवान्। शक्तिरियमाध्यात्मिकस्तेजोविशेषोऽस्ति। इयं हि विष्णुशक्तिर्विष्णोः स्वाभाविकं तेजोऽस्ति। तदेव तेजो यदा सद्गुरुराकृष्योपासकेऽनुप्रवेशयति, तदा तस्य दीक्षाकार्यं सम्पन्नं भवति। मृत्युकाले विष्णु-शक्तिरियमात्मानमाकृष्य स्वस्थाने नयति।

विष्णुशक्तेः स्वस्थानमस्ति विष्णुलोकः। तस्मिन् समये कर्मणः प्रभाव आत्मोपरि नापतितुं शक्नोति, यतो हि कर्माण्यपेक्ष्य विष्णुशक्तिः प्रबला-ऽस्ति। आत्मा चिदणुरूपः। विष्णुशक्तेराकर्षणेन देहं परित्यज्यायमात्मा स्व-भावत एव विष्णुलोकं प्राप्तो भवति।"

संस्कृतच्छाया [ 'मनीषी की लोकयात्रा' पृ० ३८१ ]

आधुनिकमनीषिषु योगिराजपदविभूषितानां कविराजमहाभागानामयं पुनर्जन्मतन्मुक्तिविचारः प्रकामं जन्मान्तरवादमान्यतां पुष्णातीति प्रतीमः।



## आचार्य विनोवा भावेः

भारतीयपरम्पराया अद्यतनः स्वतन्त्रविचारको मनीषी आचार्य विनोबा-भावेः स्वीये 'पुनर्जन्म अनुमान-अनुभव और शास्त्रसिद्ध है' इति शीर्षकनिबन्धे पुनर्जन्मसम्बन्धिनो निजोद्गारानाविष्कुर्वन् स्फुटमाह—

"पुनर्जन्म भवतीत्यत्रानेकानि प्रमाणानि सन्ति। अर्थात् मम दृष्टाविदं जन्म यावत् सिद्धं तावदेव पूर्वतनमग्रिमञ्चेत्यत्र कीदृशस्यापि सन्देहस्या-वसरो नास्ति।"

संस्कृतच्छाया [ 'अध्यात्मतत्त्वसुधा' पृ० ८४ ]

"मृत्यूपरान्तं तस्य स्वरूपं न किञ्चिदस्ति तथा जन्मनः पूर्वमपि किञ्चि-न्नासीदिति न भवितु' शक्नोति।............... यदि तथ्यमिदं मन्येमहि यद्वयं पूर्वं नास्म तथा मरणोत्तरं न स्थास्यामस्तर्हि कतिपयसमस्या उत्थिता भवि-ष्यन्ति। किन्तु तासां सर्वासां समस्यानां समाधानानि प्राप्स्यन्ते, यदि वय-मिदं जानीमहि यदस्माकं स्वरूपमनाद्यनन्तमास्ते।"

संस्कृतच्छाया ['अध्या० त० सु०' पृ० ८५ ]

"अस्माभिस्सुदृढयोः पित्रोरुदराज्जन्म गृहीतम्, जीवनमारब्धम्, तत्र किञ्चिद् दुःखमभूत् किंचिच्च सुखम्। किन्तु यदि वयं पूर्वं नाऽऽस्म, तर्हि सुखदुःखयोरुत्तरदायिनोऽपि न भविष्यामः। तदा सुखस्य दुःखस्य वोत्तर-दायित्वं नास्मास्वापतिष्यति। यद्यस्माभिरद्य दुष्कर्म कृतं चेद्, दुःखं भुज्ये-तेत्युचितमस्ति। परं 'पूर्वजन्मनि किञ्चिद् दुष्कृतमस्माभिः कृतं सम्भाव्यते, अत एवेदानीं दुःखं भुज्यत' इत्युक्तेस्तु "पूर्वं वयं नाऽऽस्म, नापि मरणोपरान्तं भविष्याम" इति मान्यतया सह न सामञ्जस्यमञ्चति। तात्पर्यमिदमस्ति यत् पूर्वसत्ताया अग्रे भविष्यत्तायाश्च वार्ता यदि न मन्येरन्, तर्हि कर्मफल-नियम एव भग्नो जायेत।

सं० छा० ('अध्या० त० सु०' पृ० ८५)

पुनरग्रे आचार्यभावेमहाभागः स्वानुभवं प्रमाणयन् प्रस्तौति यत् "ममेदं प्रतिभाति यदहं पूर्वजन्मनि वङ्गीय आसमिति। तत्रेदं कारणमस्ति यदहं

यायावरोऽस्म्येव, भ्रमणप्रसङ्गाद् यदा वङ्गं प्राप्तस्तदा दृष्टवान् यद् यावान् समयः श्रमश्च मम भाषान्तरशिक्षणे लग्नौ, तदपेक्षया बहुसौविध्येन वङ्ग-भाषा मया ज्ञाताऽभूदिति।। एतद्धि ममानुभव एवास्ति।

सं० छा० ('अध्या० त० सु०' पृ० ८६)

"पुनर्जन्म विना जीवन नीरसमस्ति। यदि वयं पुनर्जन्म नाङ्गीकरिष्यामस्तदा जीवने कोऽपि स्वाद एव नावसरेत्।

सं० छा० ('अध्या० त० सु०' पृ० ८७)

"प्रत्येकं जनो निजप्राक्तनजन्मनामनुभवान् समूह्य नवं जन्म गृह्णाति। इदं कथनं तु नोचितमस्ति यद् विज्ञानं यावदेतन् न समर्थयेत्तावन्न मंस्यामह इति। विज्ञानं तु सर्वथैव पूर्णप्रमाण (फुलप्रूफ) मपेक्षते। 'फुल' इति कथ्यताम् 'फूल' इति वोच्यतां, प्रौढानां कृते तु स्वल्पमपि प्रमाणं ('प्रूफ') पर्याप्तं भवति। किन्तु वैज्ञानिकानां सामान्यजनानां च कृते तु सर्वथैव 'फुल-प्रूफ' इत्यपेक्षणीयमस्ति।"

संस्कृतच्छाया ('अध्या० त० सु०' पृ० ८८)

सयुक्तिकान्येतानि भावेवचनानि जन्मान्तरवाद आस्थोत्पादे नितरामुपोद्-बलकानि सन्तीति मयोदाहृतानि।



## क़ुरानशरीफ़े पुनर्जन्मवादः

पुनर्जन्मवादे कुरानोऽपि साक्षी वर्तत इत्यत्र कतिपयप्रमाणानीहोदाह्रियन्ते—

"के यफ़ तक्फ़ुरुन बिल्लाहे व कुन्तुम् अम्वातन् फ़ अहयाकुम् सुम्मु यमीतकुम् सुम्म यो हयीयकुम् सुम्म इल्य हे तुर्जेऊन।" (सुरते फातेहः मक्की रुकुअ ३ आयत ८)

अर्थात् "त्वं कथं न मन्यसे अल्लाहम्, (पश्य) त्वं मृतोऽभूः, तेन तुभ्यं जीवनं दत्तम्। त्वं पुनर्मरिष्यसि, स पुनरपि तुभ्यं जीवनं प्रदास्यति। अन्ततस्त्वं तदभिमुखमेव परावर्तिष्यसे।" (धर्मवीर आर्यमुसाफिरकृतं कुरानभाष्यम्, प्र. खं. पृ. ३४)

"अह्यातना वोद अमातना, कुल् योह्यो हल्लजी अन्शा अहा अव्वल मर्रा"।

अर्थात् "अस्माकं मरणानन्तरं तेन वयं पुनर्जीविताः। तथा येन त्वं पूर्वं जीवितः, स एव त्वां पुनरपि जीवयितुं शक्नोति"।

"युख्रिजुल् हय्या मिनल् मय्यती, व युख्रिजुल् मय्यता मिनल् हय्यी।"

अयमर्थः—स खुदा हयातात् जीवनात् पृथक्कृत्य मृत्युमुखे निक्षिपति तथा मृत्योः पृथक्कृत्य च हयाते निक्षिपतीति।

"या अय्योहल् इन्सानो इन्नका कादिहुन् एला रब्बेका कादिहन् फ़ मुलाक़िहे लतर्कब्बुन्न तबकन् अन् तबक़"।

अयमस्यार्थः—हे भद्रपुरुष! त्वं स्वखुदाभिमुखं जाफिशानीं कुर्वन् गन्तासि। स्तरात् स्तरं श्रेणीतः श्रेणीं च चलितासीति।

"मिन्हा खलक़ना कुम्, व फी हा नोईदुकुम्, व मिन्हा नुख्रुजुकुम्, एला तआरतीन् उख़रा"।

अर्थात् मया त्वं मृत्तिकात उत्पादितोऽसि, तथा तस्या एवान्तस्त्वां परावर्तयिष्यामि, तस्या एव च पुनर्निःसारयिष्यामि, अव्यवधानेनान्तं यावदिति।

"सुम्मा ब अस्माकुम् मिन्बोद मौतेकुम् तअल्लकुम् तुष्कुरुन्"

अयमर्थः—पुनर्मया त्वमुत्पादितस्तव मरणानन्तरम्। येन त्वं मम कृतज्ञो भवेः।

संस्कृच्छाया ('समन्वयः', डा० भगवानदासकृतः, पृ० २५३-२५४)

कुरानशरीफस्यैतान्यायतानि नास्तिकानां कृते ईश्वर (खुदा) स्यास्तित्व-स्वीकाराय अवतारितानि वर्तन्ते, यानि पुनर्जन्मसिद्धान्तेऽपि स्पष्टतया प्रमाण-भूतानि सन्तीति।

कुरानस्यापि जन्मान्तरसहमतौ आचार्यविनोबाभावेकथनमपि ध्यातव्य-मस्ति। यथा—"कदाचिन्मुहम्मदः पृष्टो यत् गैबविषयेऽज्ञातविषये वा प्रतिपादयत्विति। तेनोत्तरं दत्तं यदीदं मया ज्ञातमभविष्यत् तदा सम्पूर्ण-सृष्टेरुपरि मम शासनमचलिष्यत्। मृत्यूपरान्तं जीवनमस्तित्वे तिष्ठति। स नवशरीरधारणं न करोति, किन्तु सूक्ष्मे लिङ्गदेहेऽवस्थितस्तिष्ठति। नवं शरीरं धारयति नवेति स्पष्टं न वक्तुं शक्यते। अतः कब्रीस्ताने शयान-स्तिष्ठतीति। इत्थञ्च यवनजना अपि मन्यन्ते यन्मरणोत्तरं जीवनमस्ति। केवलमयमेव प्रश्नोऽवशिष्यते यत्तज्जीवनं सूक्ष्मरूपे स्थूलरूपे वा विद्यत इति"।※

संस्कृतच्छाया ('अध्या० त० सु०' पृ० ८७)



※पुनर्जन्मनि खीस्तमतविषयेऽप्याचार्यभावेः कथयति—

"श्रुतं मया यदिदानीं कतिपये खैस्ता अपि पुनर्जन्म मन्तुमारब्धवन्त इति। अतो वयं नैतत् कथयितुं शक्नुमो यद् यावद् विज्ञानद्वारा पुनर्जन्म-सिद्धान्तो यथार्थो न प्रमाणीक्रियेत तावत् तत्स्वीकारो नैव कर्तव्य इति।"

संस्कृतच्छाया (अध्यात्मतत्त्वसुधा पृ० ८७)

## जन्मान्तरवादे पाश्चात्यदार्शनिकानां विचाराः

अतः परमहं पुनर्जन्मसम्बन्धे विदेशस्य प्राचीनार्वाचीनदार्शनिकानां विचारानिहोदाहरिष्यामि। यद्यपीदमधिकं शोभनमभविष्यद् यद् वैदेशिकविदुषां विचारा अपि तेषामेव शब्दैरुपास्थापयिष्यन्त किन्तु तेषां मौलिककृतीनां दौर्लभ्यमाकलयन्नन्यत एव तेषां पुनर्जन्मसम्बन्धिविचारान् संकलय्य समासतोऽस्मिन् निबन्धेऽवतारयामि।

**पीथागोरसः (वि० पू० ५२४ तमं वर्षम्)**

अयं यूरोपस्य सर्वस्मात् प्राचीनो दार्शनिकोऽभूद् यः पुनर्जन्म मन्यते स्म। दर्शनस्येतिहासकाराणां कथनानुसारेणास्य मनीषिणः समयः ख्रीस्ताब्दारम्भात् प्राक् षष्ठशतकमस्ति। यद्यप्यस्य कश्चिद् ग्रन्थ उपलब्धो नास्ति, तथापि फीलोलाड्सप्रभृतीनां तदनुयायिनामुक्तिसाहाय्येनास्य सिद्धान्तस्य परिज्ञानं क्रियते। पीथागोरसानुयायिनां कथनमस्ति यदात्मा देहाद् देहान्तरं गन्तुमर्हति। दशसहस्रवर्षानन्तरं सम्पूर्णः संसारः पुनर्यथापूर्वं जायते। जीवा यदिह कर्म कुर्वन्ति, तत्फलं तैर्भविष्यत्यवश्यं प्राप्तं भवतीति। इत्थञ्च पीथागोरसस्य विचारः पुनर्जन्मसम्बन्धे वैदिकदर्शनैः साम्यं भजत इति सुवचम्।

**एम्पेडोक्लीजः(वि० पू० ४३८ तमं वर्षम्)**

इमं दार्शनिकं जनाः पश्चिमदेशस्य कणादं कथयन्ति। तत्रेदमेव कारणमस्ति यदयमात्मतत्त्वविषये इन्द्रियविषये परमाणुविषये च कणादेन सहमत आसीदिति। अयमपि पीथागोरस इव जीवस्यानेकजन्तुषु गतिं मन्यमानो जन्मान्तरवादमङ्गीकरोति।

**प्लेटोः (वि० पू० ३७१ तमवर्षम्)**

प्लेटोः सुकरातस्य पट्टशिष्य आसीत्। यूरोपीयदार्शनिकेतिहासे सुकरातः प्लेटोररस्तूश्चेमे त्रयः केन्द्रीभूताः सन्ति। एष्वपि मध्ये प्लेटोदर्शनं प्रथमस्थानमधितिष्ठति। प्लेटोरात्मानममरं मन्यते। तेन ये ग्रन्था रचितास्तेषां मूलतत्त्वं पुनर्जन्मैवास्ति। तेनैकत्र प्रतिपादितम्—अस्माकं देहापेक्षयाऽऽत्माऽत्यन्तमेव प्राचीनोऽस्ति। स वारं वारं भिन्नं भिन्नं जन्म गृह्णाति। तेनात्मनोऽमरत्वसम्बन्धे फीडो (phoedo) नामके स्वग्रन्थे चतस्रो युक्तयो दत्ताः। आसु प्रथमा युक्तिरस्ति—वृद्धिह्रासौ, उपकारापकारौ, शयनजागरणे इत्यादि-

द्वन्द्वजातमिव जीवनमरणे अपि द्वन्द्वं सहलग्नमस्ति। अनया युक्त्या गीतायाः "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इति वचनं स्मृतं जायते। अर्थात् युक्तिरियं पूर्णरूपेण जन्ममरणपरम्परायाः पुनर्जन्मवादस्य च समर्थिका वर्तते।

द्वितीया युक्तिः शरीरादात्मानं पृथग् बोधयन्ती सिद्धं करोति यन्मरणोत्तरं शरीरमेव नश्यति, आत्मा तु पुनः पुनःशरीरान्तरधारणाय सदाऽमरस्तिष्ठतीति। इत्थमेव तदीये तृतीयचतुर्थयुक्ती अपि पूर्वजन्मपुनर्जन्मनोः प्रमाणे भवन्त्यौ प्लेटोः पुनर्जन्मवादित्वं साधु साधयतः।

**फाइलो** (वि० पू० १०६ तमवर्षम्)

फाइलो यूनानीदर्शनस्य विशिष्टो विद्वान् यहूदीदार्शनिक आसीत्। अयमनिर्वचनीयं निर्गुणं सर्वथा पूर्णमीश्वरं मन्यते स्म। एतन्मते आत्मनो बन्धनमज्ञानमूलकमस्ति। यदाऽज्ञाननाशकमात्मनो विशुद्धज्ञानमुत्पन्नं भवति, तदा स मुक्तो जायते। अन्यथा तु नैकजन्मान्तरेषु स शरीराणि धारयति। एवं शरीरसम्बन्धेन स पापकर्मसु प्रवर्ततेतराम् येन बन्धनान्न मुच्यते। इत्थञ्च प्रतीयते यत् फाइलोः अपि जन्मान्तरवादस्य पूर्णः पक्षपाती आसीदिति।

**आगस्टिनः** (वि० सं० ४०९ तः ४८६ तमवर्षम्)

आगस्टिनो यूरोपीयदर्शनस्य माध्यमिककालस्य सर्वप्रथमो दार्शनिकोऽभूत्। स च कालो धार्मिककाल इति मन्यते। स आत्मानं शरीरात् सर्वथा भिन्नं पदार्थं मन्यते स्म। जीवस्य शरीरेण सह सम्बन्धविषये तस्य विचारोऽस्ति यदयं सम्बन्धः कथं जात इति न वक्तुं शक्यते। परमिदं निश्चितमस्ति यदेतज्जन्मनः प्राक् जीवस्य केनापि देहेन सम्बन्धो नासीत्। अथवा इत्थं वक्तव्यं यत् पूर्वजन्म नासीत्, किन्तु एतच्छरीरान्ते जाते जीवस्य नाशो न भवति, प्रत्युत पुनर्जन्मधारणाय सोऽस्तित्वे तिष्ठति। तथा भक्तिश्रद्धाभ्यां परमेश्वरस्य कृपामधिगत्य मुक्तो जायते। एवं च सेन्ट आगस्टिनस्य सिद्धान्तः पुनर्जन्मवादस्यात्यन्तं निकट आसीदिति प्रतीयते।

**लिब्नीज़ः** ( वि० सं० १७०० तः १७७२ तमवर्षम् )

लीब्नीजः संसारं चेतनपरमाणूनां संघटितरूपं मन्यते। एषु शक्त्यणुषु मध्ये केषांश्चिच्चेतनता स्फुटा केषांश्चिच्च गुप्ता वर्तते। येषां चेतनशक्तिः प्रकटा वर्तते, ते उच्चस्तरीयाः शक्त्यणवः सन्ति, यान् मनुष्याणामात्मेति

कथयन्ति। येषान्तु चेतनाशक्तिर्गुप्तास्ति, ते बाह्यपदार्थाः कथ्यन्ते। मनुष्याणामात्मसु बाह्यपदार्थेषु च प्रथममन्तरमिदमस्ति यन्मानवशक्त्यणूनामेकः केन्द्रभूतो मुख्याणुर्भवति, योऽन्यानणून् संघटितान् करोति रक्षति च। बाह्यपदार्थाणुषु नैतादृशं संघटनमस्ति। अन्यदन्तरमिदमस्ति यन्मानवात्मसु स्पष्टमात्मज्ञानमस्ति, अन्यपदार्थेषु चास्पष्टं वेदनामात्रमस्ति। आत्मरूपेषु शक्त्यणुषु सर्वदा परिणामो भवतितराम्। अयमेव परिणामो जीवनं कथ्यते। मृत्युरप्यस्यैव परिणामस्यैकोऽवस्थाविशेषोऽस्ति। लीब्नीज इमं परिणामं स्वभूतपूर्वपरिणामाधीनं मन्यते। अर्थान्मृत्युरूपः परिणामो भूतपूर्वस्य जीवनरूपस्य परिणामस्याधीनो भवति, तथा जीवनपरिणामोऽपि भूतपूर्वमृत्युपरिणामाधीनो भवति। एवंरीत्या जन्ममरणपरम्परां वटबीजन्यायेनान्योन्याश्रितां मन्यमानो लीब्नीजोऽपि पूर्वजन्मपुनर्जन्मनोः समर्थनं करोति।

**शोपेनहावरः (वि० सं० १८४२ तः १८९७ तमवर्षम्)**

आर्थर शोपेनहावरो जर्मनीदेशस्य डैंजिकनगरे समुत्पन्नः। यूरोपीयदार्शनिकेषु प्लेटोरतिरिक्तो नैतत्सदृशः कश्चिदन्य उत्तमशैल्या लेखकोऽभूत्। एतन्मतेन इच्छाशक्तिः (संकल्पशक्तिः) एकं सर्वव्यापि तत्त्वमस्ति, या सर्ववस्तूनामुत्पत्तेः स्थितेश्च मूलमस्ति, शोपेनहावरेण लीब्नीजहेगेलप्रभृतिप्रत्ययवादिनां मतं खण्डयता इयमेवेच्छाशक्तिः प्रमातुः पारमार्थिकं स्वरूपमुक्ता। अन्ये मनीषिजना आत्मनः स्वभावं ज्ञानं मन्यन्ते स्म, किन्त्वनेकैरुदाहरणैरनेन संसाधितं यदियमिच्छैव संसारस्य मूलमस्ति। यावदिच्छा कामना वाऽस्ति, तावत् संसारो वर्तत इति। कियन्तो जना आत्मघातं कुर्वन्ति बुध्यन्ति च यदनेनात्मघातेन संसारान्मुक्तिर्भविष्यतीति। परमयं तेषां भ्रमोऽस्ति। यतो हि यावत् कामना वर्तमाना भवति, तावत् क्व संसारान्मुक्तिः? तस्य कामनैव तस्य कृते शरीरान्तरं रचयित्वोपस्थापयति। एवं स्वमतं व्याचक्षाणः शोपेनहावरः पुनर्जन्मवादं पूर्णतया समर्थयति स्म।

**निटशेः (वि० सं० १९०१ तः १९५६ तमवर्षम्)**

जर्मनपण्डितो निट्शेः अपि, यो विंशयां शताब्दयां 'परमेश्वरो मृत' इति कथयन् घोरो निरीश्वरवादी समभूत्, पुनर्जन्मवादं स्वीकरोति। स लिखति यत् कर्मशक्तेर्यानि रूपान्तराणि सदा भवन्ति, तानि मर्यादितानि भवन्ति तथा कालोऽनन्तोऽस्ति। अत एतत् कथयितुं बाध्यता समापतति यदेकवारं यानि नामरूपाणि उत्पन्नानि जातानि, तान्येव पुनरग्रे यथापूर्वं कदाचिदवश्यमुत्पन्नानि भवन्त्येव। अत एव हि कर्मचक्रं केवलमाध्यात्मिकदृष्ट्यैव

सिद्धं जायते। तेनेदमपि लिखितं यदियं कल्पना उपपत्तिर्वा मम निजया स्फूर्त्यैव प्रतीताऽस्ति। अस्यापि मतं जन्मान्तरवादानुकूल्यमेव भजते, कामं कण्ठतो नोच्यत इति।

**सर विलियम जेम्सः (वि० सं० १८९९ तः १९६७ तमवर्षम्)**

विलियम जेम्सोऽमेरिकायाः सर्वश्रेष्ठो दार्शनिको मन्यते। एतस्योपरि धार्मिका वैज्ञानिकाश्च सर्वविधा एव प्रभावाः पतिता अभूवन्। कार्यसाधनता उपयोगिता वाऽस्य मतेन सत्यनिर्णयाय निकषभूताऽस्ति। एतदर्थं स आस्तिकवादं नास्तिकवादं चादत्ते। स वदति, आस्तिकवाद आशायाः सन्तोषस्य च दर्शनमस्ति। अत आस्तिकवाद एव सत्यः श्रेष्ठश्चास्ति। एतद्विपरीता नास्तिकताऽस्मान् नैराश्यसमुद्रे निमज्जयति। नास्तिकवाददृष्ट्या समस्तोऽयं संसारो निष्प्रयोजनो निराधारश्चास्ति। वयं जलबुदबुदवन् नष्टा भविष्यामो, मरणानन्तरञ्च दान-तपःक्रिया-जप-योगादयो नास्माकं कस्मैचित् फलाय कल्पिष्यन्ते। वस्तुतो नास्तिकवादिनः कृते हस्ते हस्तमाधायोपविष्टत्वमन्तरा नान्यत् किमपि कर्तव्यमस्ति। एतैरेव कारणैर्नास्तिकवादो मिथ्याऽस्ति। एवं रीत्या जेम्समहोदय आस्तिकवादं पूर्णतया समर्थयन् तदन्तर्गतान् ईश्वरवाद-पुनर्जन्मवाद-परलोकवादादीन् तदीयसिद्धान्तानपि स्वीकरोति। किं बहुना! भूतप्रेतावेशादिविषयकस्यात्मसम्बन्धिनः प्राचीनानुसन्धानस्यापि स पूर्णपक्षपात्यासीत्।

संस्कृतच्छाया (गुलाबरायकृतः 'पाश्चात्य दर्शनों का इतिहास' ग्रन्थः)

**एफ. सी. एस. शिलरः**

बिलियमजेम्सस्यानन्तरभवः शिलरमहोदयो नवीनो दार्शनिकोऽस्ति। अयमुपयोगितावादादप्यधिकविस्तृतस्य मानवतावादस्य प्रवर्तकोऽस्ति। अयमप्याधुनिकविज्ञानेन सह प्राचीनधार्मिकसिद्धान्तानामपि पोषकोऽस्ति। शिलरमहोदय आत्मनोऽमरत्वं मन्यमानो जेम्सवद् भूतप्रेतादिसत्तामपि मन्यते। अयमपि परलोक[1]मावागमौ च स्वीकुर्वन् पुनर्जन्मवादस्य समर्थकोऽस्ति। [अवतेर्गत्यर्थकाद् घञि '[1]आव' इति व्युत्पन्नः।]

**सर ओलिवर लाजः**

वयमनुभवामो यदस्माकं मृत्योरनन्तरमस्माकं जन्मापि ध्रुवमस्तीति।

**डब्ल्यू टन्डर जौन्सः**

आवागमावस्मान् शिक्षयतो यदात्माऽस्मिन् जीवने प्रविशति, नत्विदमस्य

नूतनं निर्माणमस्ति। प्रत्युतातिप्राचीनकालपरम्परातोऽस्यां पृथिव्यामितोऽन्यत्रापि चायं विद्यमानोऽस्ति। प्राचीनावागमनसिद्धान्तानुसारेणेदं बुध्यते यदात्मा ईश्वरश्च ज्ञानानन्दस्वरूपौ स्त इति।

**ई. डी. वौल्कर:**

अयं निश्चयो युक्तियुक्तो नास्ति यदात्मा स्वमातापित्रोर्वीर्येणैवोत्पन्नो भवतीति। अथवा पश्चात् कयापि शक्त्या कस्माच्चिद् विश्वान्तरादाकृष्यत इति। मातापित्रोः शारीरिकसम्बन्धकारणादेव तावात्मनः कर्तारौ स्त इति कथयितुं नैव शक्यते। यदि सूक्ष्मवीक्षणयन्त्रद्वारा बहुपरिवीक्षणपूर्वकं कश्चिन्मनुष्यो दृश्यताम् तथा तद्द्वारैव कश्चिदमानवोऽपि दृश्यताम्, तदेदमवगतं जायेत यदयं मनुष्यशक्योत्पादनीयः पदार्थो नास्ति। प्रत्युतात्मा जगति उत्पत्तेः पूर्वमपि पश्चादपि च स्थायी कदापि कथमपि विनाशेन रहितः सिध्यतीति।

संस्कृतच्छाया (राल्फ शिर्लेरचितात् "प्रोब्लेम आफ रीवर्थ"
इति पुस्तकादुद्धृतस्य)

यद्यपि निकटातीतविदेशिदर्शनोपरि भौतिकविज्ञानेन स्वप्रभुत्वमधिकमारोपितमभूत्, तथापि न्यूटनस्य गुरुत्वाकर्षणसिद्धान्तो जर्मनतत्त्ववेत्तुः आईंस्टाइनमहानुभावस्य सिद्धान्तैरस्तव्यस्तीकृतः। एवञ्च शुद्धभौतिकवादमाधृत्य स्थिरीकृतं तत्त्वज्ञानमद्य सन्देहदृष्ट्या द्रष्टुं प्रारभ्यत। विगतयोर्महायुद्धयोर्वैज्ञानिकचमत्काराणां संहारकपरिणामेभ्य उद्विज्य यूरोपीया जनता विज्ञानेऽप्याध्यात्मिकतामन्विष्यन्ती वर्ततेतराम्। तेष्वेव जे. एस. मैकेन्जीमहोदयो ब्रह्मवादस्य समर्थकोऽस्ति। भूतवादानेकवादनिरपेक्षवादानां स्थानेषु प्रत्ययवादैकवादसापेक्षवादानामभिमुखं लोकानां प्रवणता भवतितमाम्। तत्रेश्वरवादमावश्यकं मन्यमानो विदेशो नित्यात्मवादपुनर्जन्मवादयोरत्यन्तं निकटे यातिराम्। अमेरिकायान्तु परलोकतत्त्वमद्यतनो वैज्ञानिकविषयो भूत इति।

किं बहुना! वर्जीनियाविश्वविद्यालस्य चिकित्सासंकाये स्नायुमनश्चिकित्साविज्ञानविभागस्याचार्यस्य डा० इयान स्टीवेंशनमहानुभावस्यापि कथनमस्ति यत् पुनर्जन्मवादमन्धविश्वाससंज्ञया व्यवहृत्य तस्योपेक्षा नैव कर्तुं शक्यते, प्रत्युतायं वाद एकं तथ्यमस्ति। अतोऽत्र गम्भीरानुसन्धानेन भाव्यम्।

डा० स्टीवेंशनः, यः १९७२ तमे ख्रीस्ताब्दे भारतस्य निजाष्टम्यां यात्रायामिहागतोऽभूत्, प्रावोचत्, यदस्मिन् विषयेऽनुसन्धाननिष्कर्षैः कतिपयरुग्णानां रोगचिकित्सायां पर्याप्ता सहायता प्राप्स्यते। डा० स्टीवेंशनो व्यज्ञा-

पयद् यन्मया कतिचनैतादृश्यः समस्या अवलोकनाय प्राप्ताः, यासु जनाः तैरेव रोगैर्ग्रस्ता दृष्टा, ये तेषां पूर्वजीवने आसन्। सोऽबोधयद् यद् भारते शिशुभिर्बहुधा स्वपूर्वजीवनस्य वृत्तान्ताः स्मर्यन्ते। यतस्ते पूर्वजीवनस्य वृत्तान्तज्ञापनेन न वार्यन्ते। बौद्धदेशेष्वपि पूर्वजन्मनो बह्व्यो घटना द्रष्टुं मिलन्ति। एषु देशेषु पुनर्जन्मप्राप्तशिशुभिराधिक्येन विवरणप्रदानाद्धेतोः पूर्वजन्मघटनानामनुसन्धानं सारल्येन कर्तुं शक्यते। कतिपयप्रसङ्गेषु पुनर्जन्मप्राप्तशिशुषु भयभावुकतयोर्भावनाऽधिकतरा दरीदृश्यते।

पुनर्जन्मनोऽधिकृतास्वधिकांशघटनासु प्रोफेसरस्टीवेंशनोऽद्राक्षीद् यत् पूर्वजन्मनि सम्बद्धजनाः कस्याश्चिद् दुर्घटनाया हिंसाया वा पाशे पतिता अभूवन्निति। एवं विधव्यक्तीनामाग्नेयास्त्रं दृष्ट्वा, तच्छब्दं वाकर्ण्य, विद्युत्पातेन वा भयग्रस्ततायाः पृष्ठभूमौ तदीयपूर्वजीवने आग्नेयास्त्रेण विद्युत्पातेन वा जातो मृत्युः कारणतया दृष्टः।

डा० स्टीवेंशनेन वर्मायां, थाईलैण्डे, लेबनाने, तुर्क्यां, सीरियायां, श्रीलङ्कायां तथा कतिपययूरोपीयदेशेषु पुनर्जन्मघटनानामध्ययनं कृतमस्ति, तथा तस्य विश्वासोऽप्यस्ति यत् पुनर्जन्मसिद्धान्तस्य खण्डने कश्चित् पुष्ट आधारो नास्ति। भारते तेन पुनर्जन्मसम्बन्धिनां येषां विंशतिप्रसङ्गाना-मध्ययनं कृतमस्ति, तेषु पूर्वजीवनस्य सप्त परिवाराः समवलोकिता अभूवन्। एवंरीत्या च पुनर्जन्मनः पुष्टिः कृताऽभूत्।

एकस्या व्यक्तेर्मृत्यौ तदीयपुनर्जन्मनि चानुपाततः त्र्यादिपञ्चावधिवर्षाणा-मन्तरं दृष्टम्। डा० स्टीवेंशनो व्यज्ञापयद् यदधिकांशप्रसङ्गेषु तस्मिन्नेव देशे पुनर्जन्म दृष्टं, यत्र तद्व्यक्तेर्मृत्युरभूत्। किन्तु अस्यापवादोऽपि दृष्टोऽस्ति। तेन महोदयेनैकस्यैवंविधप्रसङ्गस्य चर्चा कृता, यस्मिन् एकेन शिशुना स्वाभि-भावका एतादृश्यां भाषायां नृत्यन्तो गायन्तो दृष्टाः, या भाषा तदीयपूर्वजीव-नीयपारिवारिकभाषातो भिन्नाऽऽसीत्। तेन श्रीलङ्कायामेकोनविंशतेः थाइलैण्डे च चतुर्दशानामेतादृग्घटनानामवलोकनं कृतमिति साधिकारमुक्तम्।

डा० स्टीवेंशनस्य कथनमस्ति यत् पुनर्जन्मप्रसङ्गं दृष्ट्वैव शिशवोऽल्पवय-स्येवानुसन्धानबुद्ध्या द्रष्टव्याः, यतो हि पञ्चषवर्षवयस्कत्वे सति पाठशालां यान्तस्ते पूर्वजीवनस्य वृत्तान्तान् विस्मर्तुमारभन्त" इति।

संस्कृतच्छाया ( "आज" पत्रिकात उद्धृतस्य, २४ अक्टूबर १९७२ ई॰ )

# मनोविज्ञानं पुनर्जन्मवादश्च

मनोविज्ञानस्य प्रसारोऽपि जनानाध्यात्मिकताभिमुखं गमयितुमिदानीं कल्पते। मनोवैज्ञानिकगवेषणाभिरद्यात्मनोऽमरत्वपुनर्जन्मनोर्विश्वासो निश्चयात्मकतां प्रापितोऽस्ति। विषयेऽस्मिन् सर ओलिवरलाजस्य 'रेमण्ड' नामके पुस्तके तत्पुत्रेण स्वमरणोत्तरसत्तायां यत् प्रमाणं दत्तं, तद्ध्यानार्हमस्ति।

मनोविज्ञानस्य सिद्धान्तानुसारेण बालकानां मनोविकासस्य द्वे उपकरणे प्रतिपाद्येते। ते स्तः, बालकस्य जन्मजातः स्वभावो बाह्यपरिस्थितिश्चेति। अत्र जन्मजातस्वभावेन (प्रकृत्या) बालकस्य भावि सम्पूर्णं जीवनं प्रभावितं तिष्ठति। अर्थाज्जन्मकालत एव बालकः स्वीयान् पृथग् बुद्धिरुचिसंस्कारानादाय जायते, ये तस्य भाविमनोविकासे साहाय्यं कुर्वन्ति। अयं हि जन्मजातः स्वभावो निश्चितरूपेण तस्य पूर्वजन्मत एव प्राप्तस्तिष्ठति।

एवमेव प्राणिजीवनस्य सञ्चालकौ जन्मजातार्जितभेदाभ्यां द्विप्रकारौ व्यवहारौ मनोवैज्ञानिकैर्मन्येते। तत्र जन्मजातव्यवहारस्य द्वौ भेदौ कृतौ स्तः—सहजक्रियाः मूलप्रवृत्तयश्चेति। पतङ्गानां जीवने सहजक्रियाणां प्राधान्यं तिष्ठति। पशूनां जीवने तेषां मूलप्रवृत्तीनां स्थानं प्रधानं भवति। मनुष्याणामपि जीवने प्रारम्भावस्थायां मूलप्रवृत्तीनां साम्राज्यं तिष्ठति, तथा विकासेन सार्धं परिवर्तनं प्राप्य ता मूलप्रवृत्तयोऽभ्यासस्वरूपतां धारयन्ति। एतेषां जन्मजातव्यवहाराणां मूलेऽपि पूर्वजन्मव्यवहाराणां संस्कारा एव भवन्ति।

एवं मनोवैज्ञानिकानां कथनानुसारेण चतुर्दशमूलप्रवृत्तिभ्यो भिन्नाः अनुकरण-स्पर्द्धा-निर्देश-सहानुभूतयोऽपि जन्मजातप्रवृत्तयोऽभिमताः सन्ति। एतासां पृथक् पृथग् विवेचनमनपेक्षितमस्ति, तथापि एतावद् वक्तव्यमावश्यकं विद्यते यदिमाः प्रवृत्तयो जन्मसमये नाकस्मादायान्ति, किन्त्वासामपि सम्बन्धो बालकस्य पूर्वजन्मनैव वर्तते।

यद्यपि मनोवैज्ञानिकेष्वपि कतिपयानामियं मान्यता वर्तते यदुपर्युक्तानां जन्मजातस्वभाव-व्यवहाररूपद्विविधप्रवृत्तीनां सम्बन्धः पूर्वजन्मना नास्ति, किन्तु बालकस्य मातृपितृभ्यामस्तीति। तथापि इदं कथनं सर्वमान्यं नास्ति।

तत्र कारणद्वयमस्ति—प्रथममिदं यन्मातुः पितुश्च रजोवीर्ययोः कार्यं बालक-शरीरस्य संरचनाऽस्ति, न त्वात्मा मनो वा। अमुमेव राद्धान्तं मन्यमानेन सुप्रसिद्धमनोवैज्ञानिकेन बिलियम जेम्समहोदयेन हक्सले-स्पेंसरप्रभृतीनां वैज्ञानिकानामिदं कथनं यत् 'जीवः शरीरस्य मस्तिष्कस्य वा विकारोऽस्ति' खण्डयता स शरीराद् भिन्नो निरन्तरचेतनप्रवाहरूपोऽमन्यत।

द्वितीयमिदं कारणमस्ति यद् यदि माता पिता च मूर्खौ बुद्धिमन्तौ भीरू वा भवेतां, तदा बालकेनापि निश्चितरूपेण मूर्खेण बुद्धिमता भीरुणा वा भवितव्यम्, किन्त्वेवं न भवति। यदि कस्मिश्चिद् गुणे बालके मातृपितृ-सादृश्यं दृश्यते चेत्तत्स्य तयोर्वातावरणे पालनाद्धेतोरर्जितं कथयितुं शक्यत इति।

## प्राणिशास्त्रं पुनर्जन्मवादश्च

जन्मान्तरस्य सिद्धान्तः प्राणिशास्त्रस्यैको मौलिकः सिद्धान्तोऽस्ति। स्टैनलेहालमहाशयस्य कथनमस्ति यत्प्राणी विकासक्रमानुसारेण क्षुद्रकीटाणुत आरभ्य सभ्यताया उच्चतमसोपानं यावत् सर्वास्ववस्थासु पुनरावृत्तिं स्व-जीवनेषु करोति, तथा सर्वा योनीः पारयित्वैवात्मा मनुष्ययोनावायातीति। पुनर्जन्मापि त्विदमेवास्ति यदेक एवात्मा स्वकर्मानुसारेण विकासरूपेण संकोचरूपेण वा उच्चाधोयोनीः प्राप्नोतितमामिति।

# पुनर्जन्मसम्बन्धिन्य: कतिपयप्रत्यक्षघटनाः

"भाविताः पूर्वदेहेषु सततं शास्त्रबुद्धयः।
भवन्ति सत्त्वभूयिष्ठाः पूर्वजातिस्मराः नराः॥"

(सुश्रुतः, अ० २ श्लो० ५९)

अर्थात् स्वपूर्वदेहेषु सदा शास्त्रीयज्ञानसंलग्नाः सत्त्वगुणप्रधानाः संस्कारिमनुष्याः स्वपूर्वजन्मनः स्मरणकर्तारो भवन्ति। इयं हि जातिस्मरता पुनर्जन्मसाधने जीवितं प्रमाणमास्ते।

"रूपाद्धि रूपप्रभवः प्रसिद्धः कर्मात्मकानां मनसः मनस्तः।" (चरकः) मनसो मनस्त इति = पूर्वजन्मन्यव्यवहिते यादृङ्मनः, इह जन्मन्यपि तादृगेव मनो भवति। (चक्रपाणिव्याख्या)। अर्थात् निकटपूर्वजन्मनि यादृशं मनो भवति, तादृशमेव मन इह जन्मनि प्राप्तं भवतीति।

यदि पुनः पुनर्जन्मवादः केवलं कल्पनायाः सृष्टिरभविष्यत् तदा जातिस्मरताया विचार एवायुर्वेदादिशास्त्रेषु कुतो नाभविष्यत्, न वा क्वाप्यस्यैकमप्युदाहरणं लोके समुपालप्स्यत। पाश्चात्यदेशेष्वपि जातिस्मरतासम्बन्धे यदाऽनुसन्धानं प्रारब्धं तदा तेषु देशेषु प्राचीनकालादारभ्याधुनाकालं यावदस्य नैकान्युदाहरणानि प्राप्तानि। राल्फशिर्लेद्वारा स्वीये पुनर्जन्मपुस्तके जातिस्मरतायाः कतिचनोदाहरणानि दत्तानि सन्ति। येषु अलेक्सांड्रिना-सामोनानिरियार्काणामुदाहरणान्यत्यद्भुतानि समुद्बोधकानि च सन्ति। अतः परमहं पाठकानां समक्षं जातिस्मरतायाः कतिपयोदाहरणान्युपस्थापयामि।

काश्याः निर्गच्छतो हिन्दी "सन्मार्ग" पत्रस्य १९४९ तमवर्षीयागस्तमासस्य २६ तमतारिकाया अङ्के प्रकाशिता पुनर्जन्मसम्बन्धिनी घटना इत्थमस्ति—

"मुरादाबादः २४ अगस्तः—गते १५ अगस्ते विसौली (बदायूँ) तोऽत्र प्रमोदनामक एकः पञ्चवर्षीयबालक आगतोऽभूद् येन स्वपूर्वजन्मघटना विज्ञाप्य लोका आश्चर्यचकिताः कृताः। तेन स्वपूर्वजन्मनोऽतिसाधारणघटनानामपि विवरणं कथितमस्ति। सोऽत्र दिनद्वयं न्यवसत्, यस्मिन्

सहस्रशो जनाः, येषु नगरस्य प्रमुखजना अपि सम्मिलिताः सन्ति, तं प्रत्यमिलन्। बालकेन प्रतिपादितं यत् तस्य पूर्वजन्मनि 'परमानन्द' इति नामासीत्, तथा स मोहनलालस्य भ्राताऽऽसीत्। मेसर्स मोहनलाल ब्रदर्स इत्यस्य शाखाः सहारनपुरे मुरादाबादे च सन्ति। १९४३ तमवर्षे मईमासस्य नवमतारिकायामुदरगतया कठिनपीडया तस्य देहान्तो जातः।

परमानन्दस्य मृत्योः सार्धनवमासानन्तरं १९४४ तम वर्षे मार्चमासस्य १५ तारिकायां विसौल्याम् इन्टरमीडियटकालेजस्य प्रोफेसरश्रीबांकेलालशर्मणः (एम० ए० शास्त्रिणः) पुत्ररूपेण तस्य जन्माभूत्। यदा स व्यक्तवाग्योग्योऽभूत् तदा तेनोक्तं यत् मुरादाबादसहारनपुरयोस्तस्य 'फर्म' आसीत्। यदा स स्वसम्बन्धिनो विस्कुटक्रयणं कुर्वतोऽपश्यत् तदा तेन विज्ञापितं यन्मुरादाबादे तस्य विस्कुटनिर्मात्री एका महती कर्मशालाऽऽसीत्। यदा कदाचिद् विपण्यां बृहतीं द्विकर्णिकां (दूकान) पश्यति स्म, तदा वदति स्म यन्मुरादाबादे तस्यापि अतिबृहती द्विकर्णिकाऽऽसीत्। स यदा कदा सततमेव मुरादाबादे चलनायाग्रहं करोति स्म। दैवात् तस्य जन्मकुण्डल्यां पण्डितैस्तस्य नाम "परमानन्द" इत्येव लिखितमासीत्। परन्तु तस्य ज्येष्ठभ्रातुर्नाम 'वरमोद' इत्यासीत्। अतस्तं जनाः प्रमोदनाम्नाऽऽह्वयितुमारभन्त। तथापि स बाल आत्मानं परमानन्दनाम्नैवाह्वयितुमाग्रहं कुर्वन्नभूत्। स इदमपि निवेदयति स्म यन्मुरादाबादे तस्य भ्राता पुत्राः पुत्री पत्नी च सन्ति। शनैः शनैः सूचनेयं श्रीमोहनलालं प्राप्ता। स तं बालमानाययत्। अगस्तस्य गते १५ तम दिवसे भूम्रयानादवतरन्नेव स स्वभ्रातरं प्रत्यभ्यजानात् तं च स्वोरसा समालिङ्गत्। मार्गस्थाः सर्वा द्विकर्णिकाः भवनानि च स प्रत्यभिज्ञातवान्। गृहं प्राप्य निजपत्नीं स प्रत्यभ्यजानादतिप्रसन्नश्चाभवत्। तेन स्वजीवनस्यानेका गुप्तवार्ता विज्ञापिताः। बालकेन स्वव्यापारपीठ (गद्दी) स्यापि निरीक्षणं कृतम्। तेन निजकतिपयमित्राणामपि प्रत्यभिज्ञानं कृतम्। १६ तमे अगस्ते स्थानीयार्यसमाजे एका सभाऽभूद् यत्र बालकस्य पित्रा प्रो० बाँकेलालेन बालकस्य सम्पूर्णा गाथाः सविवरणं श्राविताः।

(मूललेखस्य संस्कृतच्छाया)

इमामेव घटनां दीनानाथपारीको दिल्लीतो निर्गच्छतः साप्ताहिक नवयुगस्य १७ तमवर्षीये ३७ तमाङ्के १९४९ तमैशवीयवर्षे ११ सितम्बरे प्रकाशितामकारयत्। तत्र टिप्पणीं कुर्वन् नवयुगसम्पादको लिखितवान्—

यद्यपि तु केवलतर्कानाधृत्य संसारस्य ग्रन्थयो नोद्घाटयितुं शक्यन्ते, तथापि प्रस्तुतो लेख एका कपोलकल्पिता कथा नास्ति, प्रत्युत एका सत्या पुष्टा च घटनाऽस्ति, याऽधुनैव किञ्चित्समयपूर्वं सञ्जाता। एकस्यापठितस्या-शिक्षितस्य च वालकस्यानेन स्मृतिचमत्कारेण जन्मान्तरवादमवहेलयतो जनान् प्रति आह्वानमिव प्राप्तं भवति। ( सम्पादकः )

( मूलटिप्पण्याः संस्कृतच्छाया )

ईदृश्येवैका घटना कतिपयदिवसपूर्वं बलियाबिलँसड़ीग्रामे घटिताऽऽसीत्, या पत्रेषु प्रकाशिताऽप्यभूत्। तस्यामेकेन बालकेन स्वपूर्वजन्मवृत्तान्ता यथावत् स्मृत्वा कथिता अभूवन्।

अन्या दिल्ल्या घटनाऽस्ति। प्रायः पञ्चदशवर्षाणि ( इदानीन्तु द्विगु-णितेभ्योऽप्यधिकानि ) भवन्ति। दिल्ल्याश्चिराखानानाम्न्यां वसतौ श्री-रङ्गबहादुरमाथुरस्य शान्तिनाम्नी कन्याऽऽसीत्। तया स्वनववर्षाव-स्थायां निजपूर्वजन्मनो वृत्तान्तान् प्रतिपाद्य चमत्कृतिरुदपादि जनेषु। सा वदति स्म—मम प्राक्तनजन्मनः पितरौ पतिश्च सपरिवारा मथुरायां निव-सन्ति। तत्र सा कन्या गन्तुमप्यभिलषति स्म। सा युक्तप्रान्तस्यैकं सेवातो गृहीतावसरं प्राचार्यं श्रीकृष्णचन्द्रं स्वपतिं नाम्ना 'केदारनाथ' इति व्यज्ञापयत्। कृष्णचन्द्रेण पत्रद्वारा सूचितः केदारनाथः स्वपुत्रेण द्वितीय-पत्न्या च सह दिल्लीं गतवांस्तत्रैतां मिलितवांश्च। कन्या पतिं प्रत्यभिज्ञाय किञ्चिल्लज्जावती जाता। पुत्रं दृष्ट्वा रुदितवती। कन्याऽपि ततो मथुरामानायिता स्वगृहादिकं याथातथ्येन प्रत्यभिज्ञातवती। मथुरायात्रायां कन्यायाः पिता, 'तेज', पत्रस्य निदेशको लालादेशबन्धुः, पण्डितनेकीरामशर्म-प्रभृतयश्च सम्मिलिता आसन्। पं० नेकीरामशर्मा लालादेशबन्धुश्चैतत्सम्बन्धे एकं संयुक्तवक्तव्यमपि प्राकाशयताम्। एवमेव च किञ्चित्समयपूर्वं वस्त्यां बरेल्यां च द्वौ बालकौ स्वपूर्वजन्मनो यथार्थं वृत्तान्तं व्यज्ञापयताम्।

[कल्याणपत्रात् (वर्षम् १० अङ्कः ६) उद्धृतस्य संस्कृतच्छाया]

एवंविधैवैका घटना मया किञ्चिद्वर्षपूर्वमेकस्याः फ्रेञ्चबालिकायाः सम्बन्धे पठिताऽऽसीत्। यस्या अध्ययनं विनैव सहसाऽनेकभाषाणां स्मरणमुत्पन्नम-भूत्। निश्चयेनायं तस्याः पूर्वजन्मन्यभ्यस्तानां तासां भाषाणां संस्कारस्य चमत्कार आसीद् यस्योद्बोधे सत्येव सर्वभाषास्मरणमजायत।

पुनर्जन्मसम्बन्धेऽन्याप्येका विचित्रा घटनाऽधुनैवाव्यवहितपूर्वकालेऽघ-

टत, यस्या उल्लेखोऽत्यन्तमुपयोगी भवेत्। मथुराजनपदे चौमुहाँनामकमेकं क्षेत्रम् (कस्बा) अस्ति तन्मथुरातः प्रायो विंशतिकिलोमीटरवर्तिनि दिल्ली-मथुराराजमार्गे पतति। तस्य ग्रामस्य लाडिलीशरणाग्रवालस्य कन्या कृष्णा नववर्षावस्थायां भगवति शङ्करेऽर्पयितुं कूपाज्जलभरणसमयेऽकस्मात् पादस्खलिता सती कूपे पतित्वा मृता जाता। घटनेयं षष्ठमार्चस्य १९६५ तमखीस्ताब्दस्यास्ति। मरणाच्चतुर्वर्षानन्तरं तयैव कन्यया त्रयोविंशनवाम्बरे १९६९ तमखीस्ताब्दे मथुराजनपद एव 'जेत' पत्रालयसमीपे पसौलीग्रामे तेजपालपण्डितस्य कन्यारूपेण जन्म गृहीतम्। यदा सा सार्धद्वयवर्षवयस्काऽभूत् तदा विचित्रप्रकारेण काञ्चिद् वार्तां कर्तुमारभत। सा निजमातरमवोचत्—मातः। यूयं तु प्रातश्चायमपि न पिबथ, मम गृहे तु प्रातश्चायमवश्यं पीयते। तया कन्ययैकस्मिन् दिवसे पुनरुक्तम्—मातः! तव गृहं तु अपक्वं मृत्तिकाया अस्ति, परं मम गृहं पक्वमस्ति। कन्याया वार्तां श्रुत्वा माता पृष्टवती—किं तत् तव द्वितीयं गृहमस्ति? नथियानाम्नी सा बालिकोत्तरं दत्तवती—मम गृहं तु चौमुहाँयां विद्यते।

नथियाबालिका यदा कदा स्वमातरं चौमुहाँग्रामे चलितुं कथयन्ती आसीत्। किन्तु माता पुत्रीं मिथ्याऽऽश्वासनेन स्वापयति स्म। संयोगादेकस्मिन् दिवसे नथिया स्वगृहसमीपे खेलन्ती आसीत्, तत्रैव च चौमुहांग्रामस्य श्रीबाबूलालः प्राप्तः। बाबूलालं पश्यन्त्येव सा कन्याऽक्रन्दत्, दादा! मामपि ग्रामं नय। श्रीबाबूलालः कन्यामुखात् स्वसम्बोधनमाकर्ण्य किञ्चिच् चकितोऽवोचच्च—त्वं कस्मिन् ग्रामे चलिष्यसि? कन्याऽवदत्—चौमुहाँ चलिष्यामि। बाबूलालोऽपृच्छत्, चौमुहांयां त्वं कस्य पार्श्वे चलिष्यसि? अहं तु त्वां न परिचिनोमि। बालिका दृढतयाऽब्रवीत्— अहन्तु त्वां परिचिनोमि, तव नाम 'बाबू' अस्ति, तथा त्वं दादा लगसि। बालिकाऽग्रेऽकथयत्—अहन्तु स्वचाचालाड़िलीशरणस्य गृहे चलिष्यामि, स मम पिताऽस्ति। बाबूलालोऽपृच्छत्—त्वं तं कथं परिचिनोषि? कन्याऽवदत्—मम गृहे वस्त्राणां द्विकर्णिका वर्तते, तवापि च वस्त्राणामेव द्विकर्णिकाऽस्ति। स पुनः प्रश्नं कृतवान्—त्वं काऽसि? कन्या कथितवती—अहन्तु 'कृष्णा' अस्मि। त्वं कथं मृताऽभूः? अहं तु कूपे पतित्वा मृताऽभूवम्। त्वं कूपे कथं पतितवती? अहं भगवच्छङ्करोपरि समर्पयितुं जलमुद्धरामि स्म। इति संवादस्तयोरभूत्तदानीम्।

ततो बाबूलालो ग्राममागतोऽकथयच्च सर्वां वार्तां श्रीलाड़िलीशरणम्।







लाड़िलीशरणो जिज्ञासापूर्तये स्वपुत्रं श्रीकालीचरणं द्वितीये दिने पसौलीं प्रेषितवान्। कालीचरणं पश्यन्त्येव सा कन्या तेन संसक्ताऽवदच्च–भ्रातः! यदाऽहं मृतवती तदा त्वं पठनाय गतवानभूः। इत्युक्त्वा कन्या रोदितुमारब्धवती। कालीचरणः कन्यां समाश्वास्य स्वग्रामं परावर्तितोऽभूत्।

तृतीये दिवसे स्वयं लाड़िलीशरणः पसौलीं प्राप्तः। कन्या यदा श्रीलाड़िलीशरणं दृष्टवती, तदा तस्य पार्श्वं धावितवती तथा तमालिङ्ग्य रोदितुमारब्धवती। लड़िलीशरणः कूपसम्बन्धिघटनादिनस्य कतिपयवार्ताः पृष्टवान्; कन्यापि च स्पष्टतया सर्वं श्रावितवती। अपरेऽहनि श्रीलाड़िलीशरणः स्वपुत्रं सम्प्रेष्य कन्यां स्वग्राममानाययत्। कन्या ग्रामस्य गृहाणि जनांश्च सर्वान् याथातथ्येन प्रत्यभिज्ञातवती। अनन्तरं सा कन्या सरलतया स्वपूर्वजीवनस्य भवनं प्रविष्टवती निजपूर्वमातरञ्च प्रत्यभिज्ञातवती। तस्या अपरिचितकन्यायाः कृते तद्भवनं पूर्णपरिचितमिव प्रतिभाति स्म।

चौमुहांयां चतुःपञ्चदिवसान् निवासानन्तरं पसौलीवासिनः स्वकन्यां पुनः स्वग्रामे आनीतवन्तः। कतिपयदिनानि पसौल्यां निवासानन्तरं कालीचरणः पुनस्तां कन्यां चौमुहांमानीतवान्। तदानीं लाड़िलीचरणस्यावुत्तः (भगिनीपतिः) भगिनी चागतवन्तावास्ताम्। अनया कन्यया तौ द्वौ प्राणिनौ दृष्ट्वैवोक्तम्—इयं तु मम पितृष्वसाऽस्ति तथाऽयं मम पितृष्वसुः पतिरस्ति। कन्यया तयोर्ग्रामोऽपि निवेदितः।

पुनः परीक्षायै लाड़िलीशरणस्तामादाय कन्याविद्यालयं प्राप्तः पृष्टवांश्चताम् यन्मृत्युदिवसे त्वया कस्यै शुल्कं दत्तमासीत्। उत्तरे तया तस्याः शिक्षिकाया हस्तो गृहीतः। शिक्षिकया स्वीकृतं यदनया मह्यमेव शुल्कं दत्तमासीदिति। सा कन्या लाड़िलीशरणस्य श्वसुरालयमपि प्रापिता, तथा तत्र सा स्वमातामहीमपि प्रत्यभिज्ञातवती

नथियां प्रति तस्याः पूर्वजन्मनः पित्रा लाड़िलीशरणेन पृष्टम्—यदा त्वं कूपे पतिता तत एतावद्दिवसान् क्वासीः? एतदुत्तरे कन्या गम्भीरभावेनोक्तवती—मरणानन्तरमहं तस्यैव कूपस्य पार्श्वे निवसामि स्म। तां प्रति पृष्टं यत् किं खादसि स्म? तदा कन्ययोत्तरितम्—मह्यमेको महात्मा करपट्टिकां ददाति स्म। अग्रे पृष्टे सा प्रत्यपादयद् यन् ममापरं किमपि स्मृतं नास्ति।

पुनर्जन्मनोऽस्यां घटनायामिदं विचित्रवृत्तमधिगतं यत् कन्यया मरणानन्तरं पुनर्जन्मग्रहणात् पूववर्तिचतुर्वर्षाणि यावत् कूपसमीप एव निवासस्य एकसाधुना प्रत्यहं प्रदत्तरोटिकानां भक्षणस्य च वृत्तं प्रतिपादितम्, यच्चापरे पुनर्जन्मप्राप्ताः शिशवः प्रायो न प्रतिपादयन्ति। एतेन मृत्योः पश्चात् प्रेतजीवनमपि किञ्चित्कालं व्यत्येतीति प्रमाणितं जायत इति।

(आजपत्रिकायां प्रकाशितस्य संस्कृतच्छाया २५ मार्चः, १९७३ ई० वर्षम्)

यद्यप्येवंविधास्त्रिचतुरा एव न, किन्तु शतशो घटनाः प्राप्यन्ते, तथापि पुनर्जन्मसिद्धये तासां सर्वासामुदाहरणरूपेणोपन्यासस्य तावदेव महत्त्वमास्ते यावद् द्विचतुराणाम्। अत एतावन्त्युदाहरणान्येव पर्याप्तानि मन्ये।

एवं, पुनर्जन्मन्येवंविधानि प्रत्यक्षप्रमाणानि यदि प्रतिस्थलमुपलभ्येरंस्तदा पुनर्जन्मन्यनुसन्धानस्य किमपि प्रयोजनं नाभविष्यत्, न वा तत्सिद्धौ भारतीयतत्त्वज्ञानस्य किमपि वैशिष्ट्यमभविष्यत्। एवम् इस्लाम क्रिश्चियनधर्मयोः कयामतकल्पनाऽपि नायास्यत्। अतः परं जन्मान्तरवादस्योपयोगितादिसम्बन्धेऽपि किञ्चिद् विवेचनमुपन्यस्य प्रबन्धमिममुपसंहरिष्यामः।





# पुनर्जन्मवादस्योपयोगिता

जन्मान्तरवादो हिन्दुसंस्कृतेरेकोऽत्यावश्यकस्तथ्यश्च न्यासोऽस्ति, यस्योपरि प्रायः सर्वेऽपि सिद्धान्ता आश्रिताः सन्ति। यथा—ईश्वरवादः, परलोकवादः, स्वर्गवादः कर्मवादो भाग्यवादादिः। प्रथममीश्वरवादो गृह्यताम्। यदि पुनर्जन्मसिद्धान्तो न मन्येत तदेश्वरस्यापि प्रयोजनं समाप्तप्रायमेव स्यात्। यतो हि यदि मनुष्यपशुपक्षिवनस्पतिप्रभृतीनामेकैकवारमेवोत्पद्य सदाकृते नाशप्राप्तिरभ्युपगम्येत, तदा तु वयं पश्यामो यत्—स्त्रीपुरुषसंयोगान्मनुष्या उत्पद्यन्ते। पशुपक्षिजातयोऽप्येवमेव यौनसम्बन्धादुत्पद्यमाना दृश्यन्ते। बीजस्य धरणीसलिलाभ्यां संयोगे जाते सस्यानामप्युत्पत्तिर्दृश्यत एव। तर्हि का पुनरावश्यकता सर्वकर्तारमीश्वरं स्वीकर्तुम्?

एतद्विपरीतो यदि पुनर्जन्मसिद्धान्तोऽभ्युपगम्यते, तदा योऽयं प्रश्नः समुत्तिष्ठति यत् कामं रजोवीर्यसंयोगाद् भौतिकदेहस्य निर्माणं जायते, किन्तु किमर्थं भवति? अर्थात् किं कारणमस्ति यद् रजोवीर्यसंयोगाज्जातेन देहेन सहात्मा निजसम्बन्धं स्थापितं करोतीति? पुनर्जन्मसिद्धान्तस्य मान्यतादशायामस्य प्रश्नस्येदमेवोत्तरं भवितुमर्हति यत् तेनात्मना पूर्वजन्मन्येतादृशानि कर्माणि कृतान्यासन् येषां फलानि जन्मान्तरे भोग्यानि सन्ति। अस्यां स्थितौ पूर्वकर्मानुसारेण जन्मान्तरप्रदानाय (पुनः शरीरधारणाय) ईश्वरोऽपि मन्तव्य एव भविष्यति। यतः स्वकृतपापकर्मणामनिष्टफलभोगाय को नाम प्राणी स्वयं देहधारणमीहेत? ईश्वरस्तु न्यायकर्ता इच्छायामनिच्छायां वा "क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इति प्रतिज्ञानुसारेण तस्मै कर्मानुसारिणीं शुभाशुभयोनिं ददात्येव।

परलोकवादस्यापि पुनर्जन्मवादेन सह घनिष्ठः सम्बन्धोऽस्ति। यतो हि यः पुनर्जन्म न मन्यते, तस्य मतेन "भस्मान्तꣳ शरीरम्" इत्यात्मापि भस्मीभूत एवेति परलोकः कस्य? एवं प्रकारेणैव स्वर्गनरकवादोऽपि जन्मान्तरवादमन्तरा न कमप्यर्थं धारयति।

कर्मवादेन सह तु जन्मान्तरवादस्यातिगभीरः सम्बन्धोऽस्ति। कर्म हि फलाभिसन्धिदृष्ट्या त्रेधा विभज्यते—दृष्टजन्मवेदनीयमदृष्टजन्मवेदनीयं दृष्टा-

दृष्टजन्मवेदनीयञ्चेति। यस्य कर्मणः फलं वर्तमानजन्मन्येव भोग्यं भवति, तद् दृष्टजन्मवेदनीयं कर्म। यस्य फलं जन्मान्तरे भोग्यं भवति, तददृष्टजन्मवेदनीयं कर्मास्ति। यस्य कर्मणः किञ्चित्फलमस्मिन् जन्मनि भोग्यं भव ति, किञ्चिच्च फलं जन्मान्तरे भोग्यं भवति, तद् दृष्टादृष्टजन्मवेदनीयं कर्म कथ्यते। ये जनाः पुनर्जन्म न मन्यन्ते, ते कर्मणां भेदत्रयं न मत्वा केवलं दृष्टजन्मवेदनीयमेव कर्म मन्यन्ते। तेषां मते नूनं कृतहान्यकृताभ्यागमदोषौ प्र सज्येयाताम्। बहूनां कर्मणां फलमभुक्त्वैव मृत इति कृतहानिः। एवं प्र त्यक्षकर्मणोऽभावेऽपीह जन्मनि दुःखित्वादिदर्शनादकृताभ्यागमो दोष इति।

एवं प्रकारान्तरेण जन्मान्तरवादिमतानुसारेण कर्मणां त्रिविध ानि फलानि मिलन्ति। प्रथमम्—कर्मानुसारिणी साध्वी असाध्वी वा योनिः। द्वितीयम्—कर्मानुसारि अल्पं पूर्णं वाऽऽयुः। तृतीयं च—कर्मानुसार्येव सुखं दुःखं वेति। उक्तं हि महर्षिपतञ्जलिना "सति मूले तद्विपाको जात्यायुर्भोगाः" इति योगसूत्रेण।

पुनर्जन्मवादेन सम्बद्धो भाग्यवादोऽपि नास्ति उपहासास्पदम्, यथा च कतिपयानामस्ति धारणा। "पूर्वजन्मार्जितं कर्म दैवमित्यभिधीयते" इति वचनानुसारेण पूर्वजन्मनि यत् कर्म कृतं, तदेव तु भाग्यमस्ति। तस्यैव पूर्वजन्मार्जितकर्मरूपभाग्यस्यानुसारेण प्राणिभ्यो योनिः आयुः सुखदुःखे च मिलन्ति। भाग्यवादो न नः शिक्षयति यत् सर्वथैव भाग्यमाश्रित्य हस्ते हस्तमारोप्योपविष्टाः शयाना वा भवत, न कमप्युद्यमं कुरुतेति। तथाप्येतावत्तु अवश्यं शिक्षयति यत् स्वापेक्षया कमप्यन्यमधिकं विद्यावन्तं गुणव न्तं सम्पन्नकुलोत्पन्नं वा दृष्ट्वा ईर्ष्यां मा कृथाः। प्रत्युत पूर्वकर्मानुसारं प्राप्तैः साधनैरेव सन्तुष्टः सन् सुन्दरभविष्यन्निर्माणाय शुभकर्मसु सततोद्योगवान् भवेति। एवं हि जन्मान्तरवादो वैदिकसंस्कृतेस्तत्तत्त्वमस्ति, एकेनैव येन विना विरोधमनेकेषां प्रश्नानां सहजं समाधानं मिलतीति।

यत्र पुनर्जन्मवादे मानवजीवनस्य नैतिकं समुत्थानं निहितमास्ते, तत्र तदस्वीकारमात्रेण मानवचरितस्यातिमहत्पतनं निश्चितमस्ति। एकः पुनर्जन्मनि विश्वासशीलो जनः, एवं मत्वा यत् स्वकृताशुभकर्मणां फलमिह जन्मनि जन्मान्तरे वा भोग्यमेव भविष्यति, अशुभकर्मकरणाद् बिभेति ततो निवर्तते च। किन्तु यस्तु जन्मान्तरं नाम वस्तु नैव मन्यते, स त्वसत्यमन्यायं हिंसां चौर्यञ्चेत्याद्यनाचारं करिष्यत्येव। यतस्तस्य कस्माद् भयमस्ति ? तस्य तु वर्तमानजीवनमेव सुखमयं कर्तुमन्धलग्नता प्रवृत्ताऽस्ति,





यथा कथञ्चिदपि सुखी भवेयमिति। एतादृशा एव लोकाः समाजे उद्‌घोषयन्ति—

> यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिवेत्।
> भस्मीभूतस्य देहस्य पुनरागमनं कुतः ?॥ इति।

एवंविधान् जनानहं प्रष्टुमिच्छामि यत् कथं कश्चित् कस्याप्युपरि दयाऽहिंसादिव्यवहारमाचरिष्यति ? स्वसमयं सम्पत्तिं चातिपात्य परेषामुपरि दयादिसद्व्यवहाराचरणस्य तदीयात्मना सह कः सम्बन्धोऽस्ति ? मार्गपार्श्वे शयानेभ्योऽङ्गहीनेभ्योऽपरिचितेभ्योऽकिञ्चित्करदरिद्रेभ्यः सकाशात् कः प्रत्युपकारो भविता, यत्तेऽन्नवस्त्राणि प्रदाय सन्तुष्टाः क्रियेरन् ? एवं सेवाश्रमेषु निःस्वार्थभावेन सेवमानानां तेषां महात्मनां निजं किं प्रयोजनं साधनीयं यद् रोगमुक्त्यनन्तरं न पुनराश्रमे कदापि दृष्टिमर्पयतां रोगिणां सेवां ते कुर्युः ? कस्यापि धार्मिकस्य स्वहस्ते किमापतति यदन्यदीयबालकानामध्ययनाय विद्यालयं परेषां स्वास्थ्यलाभाय च निःशुल्कचिकित्सालयमुद्घाटयेयुः ? इति। निश्चितमेव जन्मान्तरेऽपि शुभफलप्राप्तिभावनयैवैवंविधानि कर्माण्यनुष्ठीयन्ते। जन्मान्तरवादमश्रद्दधाना नास्तिकास्तु तथाविधजनसेवकेभ्यो लाभन्तूत्थापयन्ति, परं स्वयं तथाऽऽचरितुं नैव कामयन्ते। एतेन स्पष्टमायाति यत् पुनर्जन्मवादस्य मान्यता सदा सत्कर्मसु प्रेरणां ददाति, एतद्वैपरीत्येन च नास्तिकतया छलछद्मान्यायोत्पीडनभ्रष्टाचारादिस्वाच्छन्द्यमेव समाजे समेधत इति।

पुनर्जन्मोपादेयताविरोधेऽयमेकस्तर्क उपस्थापयितुं शक्यते यददृष्टजन्मवेदनीयं (जन्मान्तरभोग्यम्) कर्मैव कथमङ्गीक्रियताम् ? सर्वमपि कर्मजातं वर्तमानजन्मभोग्यमेव भवतीति। दृश्यतेऽप्येवम्, यच्चौराणां, दस्यूनां, व्यभिचारिणां, प्राणघातिनां च कृते कारागारनिवेशमृत्युदण्डादिफलानीहैव जन्मनि अत्रत्येभ्य एव लौकिकन्यायालयेभ्यो दीयन्ते। अतः केन प्रयोजनेन जन्मान्तरे पारलौकिकन्यायालयाद् वाऽत्रत्यपापकर्मणां फलस्याशा क्रियताम् ?

अत्रेदमेवोत्तरं वक्तुं शक्यते यत् प्रत्येकं पुण्यानां पापानां वा कर्मणां पुरस्कारेण दण्डेन वा भाव्यमिति तु तेऽपि मन्स्यन्त एव। अस्यां स्थितौ, कल्प्यतां यत् कश्चिद् दशवारान् चौर्यं कृत्वापि न केनापि ज्ञातः। पुनरेकादशे वारे चौर्यकर्मणि निगृहीतो भूत्वा वर्षद्वयस्य सश्रमकारावासदण्डेन

दण्डितः सन् तद्भुक्त्वा कारागारान्मुक्तः। किन्तु अत्रत्यन्यायालयेन पूत्र दशवारकृतानां चौर्यापराधानां कृते को दण्डो दत्तः? यदि स प्रतिवारं निगृहीतोऽभविष्यच्चेत् प्रत्यपराधं द्विद्विवर्षावधि कारावासयातनामन्वभविष्यत्। अनया एकयैव दण्डप्राप्त्या इदमेवायाति यत् निगृहीतत्वमेव तस्यापराधो न चौर्याणि।

अतो निश्चितमिदमस्ति यत् संसारे यथाकथमपि निलीय दुष्कर्माचरणेषु प्रवृत्तिर्वधिष्यते। एतन्निवारणस्यैकमात्रममोघमस्त्रमस्ति —समाजे पुनर्जन्मवादोपरि दृढास्थायाः कर्मफलयोश्च दृढविश्वासस्य प्रादुर्भावः। यश्चास्माकं संस्कृतेरमूल्योपहारो वरीवर्ति समाजस्य कृत इति।

---

## जन्मान्तरवादोऽद्यतनाभिनववादाश्च

अतः परं वयं पाठकेभ्य इदं प्रतिपाद्य, यज्जन्मान्तरवादं प्रत्यविश्वासेन संसारे कियन्तोऽभिनववादा उत्पादिताः, तथा तेषां के दुष्परिणामा भवन्ति भवितुं शक्नुवन्ति चाग्रे, ग्रन्थोपसंहारं करिष्यामः।

जन्मान्तरवादस्तस्य वैदिकधर्मस्याङ्गमस्ति, यः संसारे सर्वधर्मेभ्यः सर्ववादेभ्यश्चात्यन्तमेव प्राचीनस्तथा संसारमन्धकारात् प्रकाशे चानीतवानस्ति। अस्यैव वैदिकधर्मस्य प्रभावाद् भारतनक्षत्रं न जाने कियतीभ्यः सहस्राब्दीभ्य एकरूपेण देदीप्यमानमास्ते। इदं नक्षत्रं सर्वकालायास्तं सम्पादयितुं कियन्त एव प्रयासा वैदेशिकैरनुष्ठिताः, परं ते सफला भवितुं नाशक्नुवन्, प्रत्युताधोमुखं निपात्यास्माद्देशात् ते पलायनमाश्रितवन्तः। मम धारणास्ति यत् पुनर्जन्मेश्वरयोरमान्यतैव यूरोपदेशस्य शासकानां मस्तिष्केभ्यः साम्यवादं, समाजवादं नाजीवादं, फासिष्टवादं साम्राज्यवादं चाजीजनत्। एषु द्वौ वादौ तु विगतमहायुद्धे हिटलर-मुसोलिनीभ्यां सहैव व्यलीयेताम्। अल्पीयसां कृतकगुणानामाकर्षणेन वर्धमानस्य, साम्यवादस्य प्रभावोऽपि स्वीयैरेवानुयायिभिर्विनाशितो भविष्यति, इत्यत्र नास्ति सन्देहः। साम्यवाद-समाजवादेति एकस्यैव वस्तुनो द्वे नाम्नी स्तः। अस्य जन्मदाता जर्मन्याः कार्लमार्क्स आसीत्। अस्य हृदये ईश्वरस्य, धर्मस्य परलोकस्य चोपरि विश्वासाय पूर्वत एव किञ्चित् स्थानं नासीत्। अत एव स इमं नवीनवादमजीजनत्; तथा संसारादीश्वरादित्रयमपि सर्वकालाय विनाशयितुं स्वलक्ष्यमिव व्यदधात्।

मार्क्सवादिसमाजवादस्य व्याख्यातारस्तस्य त्रीन् भागान् प्रतिपादयन्ति—१—दार्शनिको भागो, यं द्वन्द्वात्मकभौतिकवाद इत्यपि कथयन्ति। २—आर्थिको भागः, तथा ३—राजनैतिको भागः। मार्क्सेन स्वसमाजवादिदार्शनिकभागस्य व्याख्यानं कुर्वता प्रतिपादितं यद् "इदानीं यावद् दर्शनेन संसारस्य स्पष्टीकरणं कृतम्, अधुना तेन संसारस्य परिवर्तनं करणीयं भविष्यति।" तस्य सिद्धान्तानुसारेण मानवस्य निर्माणं तासु परिस्थितिषु भवति, यासु परिस्थितिषु स निवसति। किन्तु, यतः स स्वयमपि तासां परिस्थितीनामेकमङ्गमस्ति, अतः स ताः परिस्थितीः प्रभावयितुं परिवर्तयितुं



च शक्नोति । तद्दर्शनानुसारेण संसारः केनापि सार्वभौमसत्ताधारिणा ईश्वरेण परिचालितो न भवति, प्रत्युतास्य सर्वतन्त्रस्वतन्त्रः कर्ता धर्ता मानव एवास्ति । इयमेव तु मार्क्सस्य पूर्णा भौतिकवादिताऽस्ति ।

जानन्ति विज्ञाः, भौतिकवादिदार्शनिकभागस्य कीदृशः परिणामोऽद्यतन-विश्वेन भुज्यते । आध्यात्मिकतयाऽनियन्त्रितं भौतिकविज्ञानमद्य शनैः शनैः समस्तसंसारं हिरोशिमां कर्तुमुद्घाटिततृतीयनेत्रमस्ति । संसारं प्रभावयितुं परिवर्तयितुं चाहङ्कारवान् समाजवादी मानवः स्वीयैरेव हस्तैर्निर्मितेभ्यो विध्वंसकास्त्रेभ्यो भीतभीतो भवतितराम् । कस्या अपि मानवोपरितन-शक्तेः काष्ठपुत्तलिकाभवनमस्वीकुर्वन् तथाऽऽत्मानं सर्वतन्त्रस्वतन्त्रं घोषयन् समाजवादी मानवः एकस्य मानवान्तरस्य संकेतेन क्षेत्रेषु कर्मशालासु (संयन्त्रेषु) च यन्त्रीभवन्नस्ति ।

बलाद् हिंसाद्वारा च धनिनां सम्पत्तिष्वधिकारं स्वीकुर्वद्भिः समाजवादि-मानवैः स्वोत्पादितासु लघुसन्ततिष्वपि स्वत्वाद् वञ्चितैर्भूयते । संसारे दयोपकारनामकं वस्त्वेव नास्ति । अयमेव तु वर्तमानसमाजवादस्यानि-यन्त्रितो दार्शनिको भागोऽस्ति, यो वैदिककर्मफलवादपुनर्जन्मवादेश्वर-वादेष्वविश्वासस्य दुष्परिणामोऽस्ति । अतः परमस्यार्थिकभागं विचारयन्तु ।

वैदिकजन्मान्तरवादस्यानुसारेण मानवस्य कर्मण्येवाधिकारोऽस्ति, फलन्त्वीश्वरो दास्यति, तदपि कर्मानुसारेणैव, न न्यूनं नाधिकमिति । मानवो यदि कर्मणीव फलेऽपि स्वयमेवाधिकारी अभविष्यत् तदाऽधिकार-मासाद्य फलमात्रमादास्यत्, कर्मणां प्रपञ्चे कथं पतेत् ? यतो ह्युक्तम्—

अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ।। इति ।

अर्थात् गृहकोण एव यदि मधु लभ्येत तदा पर्वतारोहणस्य काऽवश्यकताऽस्ति । अभीष्टं वस्तु यद्यनायासमेव मिलेत् तदा को नाम बुद्धिमान्नरः परिश्रमं कुर्यादिति ।

जन्मान्तरवादिनामयं नियम एतस्मिन् जन्मनि जन्मान्तरे च एकविध एवास्ति । अस्मिन् जन्मन्यपीदमेव दृश्यते यत् कर्मकरणानन्तरं तत्पारि-श्रमिकमन्य एव प्रददाति । क्षेत्रेषु संयन्त्रेषु च कर्म कुर्वतां श्रमिकाणां नास्ति साहसमधिकारो वा यत् स्वयं स्वमनसा स्वोत्पादितस्यैकोऽपि कणः पणो वा

स्पष्टुं शक्येत यावद्धि सर्वकारोऽधिकारी वा तेभ्यो न दद्यात्। परन्तु एकवारं तु समाजवादिव्यवस्था इयमेवास्ति यद् धनिकानां सर्वाः सम्पत्तीः बलादधिकृत्य सर्वेषु किञ्चित्कर्मापेक्षां विनैव ताः समं विभज्यन्तामिति। संभवतो यदा यदा मितव्ययिता, परीश्रमशीलता, बलबुद्धिभ्यः निमित्तेभ्यः सम्पत्तिषु वैषम्यमायातं भविष्यति, यद् ध्रुवमस्ति, तदा तदा समाजवादिसर्वकारेण समीकरणाय मानं तुला चोत्थापनीये भवेताम्। समाजवादी जन इदं तथ्यं न मन्यते यत् तस्या व्यक्तेस्तत्संपदां स्वामित्वं तत्पूर्वकर्मानुसारेणेश्वरप्रदत्तमस्तीति।

अयं सर्वसाधारणो नियमोऽस्ति यद् बुद्धिमत्तापूर्वकं सेवापरिश्रमवाणिज्यैः सह मितव्ययितया धनं वर्धते तथा एतद्विपरीतं मूर्खताऽऽलस्यव्यर्थव्ययिताभिः निर्धनत्वमापद्यते। बहव एवंविधा दृष्टाः सन्ति, येषां देहोपरि पूर्णं वस्त्रमपि नासीत्, परमध्यवसायेन श्रीमन्तः सम्पन्नाः। बहव एवंविधा अपि दृश्यन्ते, ये महाधनिनो भवन्तोऽप्यग्रे गत्वा निजालस्यप्रमादहेतोः करपट्टिकायै अपि परमुखापेक्षिणो जायमानाः सन्तीति। ये तु दस्युकर्मणा धनिनो भवितुमिच्छन्ति, तेऽसमाजवादिराज्येष्वपि कारागारे निक्षिप्यन्ते। तेषां सम्पतिमायत्तीकृत्य लुण्ठितेभ्योऽर्पयति सर्वकारः। किमुद्योगवाणिज्याभ्यां निजसम्पत्तिसमेधकोऽपराधी वर्तते? यद्युच्यताम् 'आम्' इति, तदा यथैका व्यक्तिः सापराधा वर्तते तथा एकं राष्ट्रमपि अपराधि भवितुमर्हति। नान्यैश्चेत् समाजवादिराष्ट्रेण सर्वप्रथमं स्वापराधः स्वीकर्तव्यस्तथा स्वसम्पदः साधनानि च निर्धनेषु साधनहीनेषु च राष्ट्रेषु समं वितारितानि कर्तव्यानि। परन्त्वेवं दृश्यते यत् पुञ्जपतिभिः समानं समाजवादिराष्ट्रमपि निजानन्दारामौ वर्धयतितमाम्, तथा प्रतिवेशिराष्ट्रमकाल्यातना भुञ्जदस्तीति। नैतावदेव, प्रत्युत तत्रत्यां स्वतन्त्रतामाच्छिद्य तत्काठिन्यानामनुचितं लाभमर्जयन्ति।

एवमाधुनिकसमाजवादस्य मूलभूत आर्थिकः सिद्धान्तोऽस्ति—उत्पादनवितरणविनिमयेषु व्यक्तिगतस्वत्वापहारः। इदमपि विचारणीयमस्ति। उत्पादनसाधनन्तु स्वयं व्यक्तिरपि वर्तते, तर्हि किं तद्व्यक्तेः स्वात्मन्यपि स्वत्वं नास्ति? इति तु परतन्त्रतायाश्चरमसीमास्ति, मानवतोपरि पशुतायाः प्रबलः प्रभावश्चास्ति। किं समाजवादिषून्नतमानवताया इदमेव स्वरूपमस्ति? कुत्रत्योऽयं न्यायो यदुत्पादकस्य वितरणविनिमययोः किञ्चिदप्यधिकारो न भवेत्? ध्यानेन दृश्यतां चेत् पुञ्जवादस्य यान् दोषांस्ते दूरीकर्तुं चेष्टन्ते,

तैर्दोषैः सार्धमेकतानराजता (तानाशाही) दोषा अपि समाजवाद्यर्थंव्यवस्थायां सघनं भरिताः सन्ति। एवं समाजवादव्यवस्थायां मनुष्याणां नैतिक-विकासमार्गः सर्वथैवावरुद्धः सम्पत्स्यते। कर्तव्याभिमुखी स्वाभाविकी प्रवृत्ति-र्न्यूना भविष्यति तथा चौर्यभावनायै असदाशयताभावनायै च प्रोत्साहनं प्राप्तं भवेत्। दयालुतोदारताक्षमाप्रभृतयो मानवोचितगुणा लुप्ता भवेयुः।

अत्र तेषां कथनमस्ति यद् दयालुतोदारताक्षमादीनां मानवोचितत्वेन कथ्यमानानां गुणानामुपयोगिता तस्मिन्नेव समाजे वर्तते, यत्र मानवो निर्धनो दुःखी अपराधी च भवेत्। समाजवादिसमाजे तु दुःखदारिद्र्या-पराधानां मूलमेव विनष्टं जायते। अतो मानवोचितत्वेन कथ्यमानानामेषां गुणानामावश्यकतैव नावशिष्यते।

किन्तु तेषामुपर्युक्ता प्रतिज्ञापि निर्दोषा तदा भवेत्, यदि मानवसमाजः सदा पूर्णं आत्मभरितश्च भवेत्। मानवेन स्वजीवने यदाकदाचिदुदारताया दयालुताया वा पात्रत्वं स्वस्मिन्नुह्यत एव। उदाहरणार्थं समाजस्य शिशवो वृद्धाश्चोपस्थापयितुं शक्यन्ते। किं तेषां जीवननिर्वाहः सर्वकारस्य पित्रोः युवकपुत्राणां चोदारतायां सदाशयतायां वा नायतते? एवंरूपा समर्थाना-मामभरितानां यूनामप्यवस्थाऽऽयात्येव समये। संसाराद् वर्गभेदोद्धूल-नमपि प्रकृतेरस्मिन् अजायबघरे (आश्चर्यगृहे) तथैवासंभवि यथा तुलायां मण्डूकानां तोलनम्। अर्थातिरिक्तान्यपि तु वर्गभेदमूलानि सन्ति, यन्निमि-त्तात् समाजवादिराष्ट्रेष्वपि शासकशासितानां बुद्धिजीविश्रमजीविनां विदुषां मूर्खाणां च वर्गभेदः स्थित एवास्ति। इमं क उन्मूलयिष्यति? सर्वेण सुखसौविध्यमपि तु समानं प्राप्तव्यम्। किन्तु यद्येवं सम्पाद्येत तथा व्यक्ति-स्तदीयविशेषतायै विशेषरूपेण पुरस्कृतो न विहितश्चेत् तदा तद्राष्ट्रं कदापि समुन्नतं भवितुं न शक्नुयात्। यदि तस्मै जनाय पुरस्कारं प्रदाय सोऽपरतो वृद्धिं प्रापितः स्यात्तदा साम्यवादस्तत्रैव समाप्तः। व्यक्तिरेव समाजस्य निर्मात्री भवति। अतस्तद्व्यक्तित्वस्योपेक्षा कृता स्याच्चेत् समुन्नतः समाजः स्वप्नायितो भविता।

किन्तु फ़ासिस्टानां नाजीनाञ्च व्यक्तित्ववन्निरङ्कुशव्यक्तित्वमपि राष्ट्र-समाजयोर्घातकमेवास्ति। अतो राष्ट्रस्य समाजस्य च कृते न केवलं व्यक्ति-वादो न वा केवलं साम्यवाद एव कल्याणकारको भविष्यति। किन्तूभय-दोषैरसंस्पृष्ट उभयोर्गुणैर्युक्तश्च मध्यवाद एव राष्ट्रसमाजयोः कल्याणं सम्पाद-





यितुं शक्नोति। यो राजनीतिभाषायां रामराज्यमिति कथयितुं शक्यते। इदमेव धर्मनियन्त्रितं प्रजातन्त्रराज्यमप्यस्ति, यद्धि पुनर्जन्मजन्मान्तरीय-कर्मफलवादयोरनुरूपाया अर्थव्यवस्थायाः प्रयोजकं संसारस्यादर्शभूतं वेद-सम्मतं भारतीयराज्यमस्ति।

मार्क्सीयसमाजवादस्य राजनैतिकभागोऽपि परिणामस्यासाधुतया समीचीनो नास्ति। तेन जनतायामनुशासनहीनत्वं बुद्धिभेदश्चोत्पन्नौ भवेताम्, तथा राष्ट्रस्य शक्तिः क्रमेण क्षीणक्षीणतरक्षीणतमावस्थाः प्राप्ता स्यात्। अतो राष्ट्रकल्याणाय युगपुरुषैर्महात्मगान्धिप्रभृतिभिर्भूयोभिरभिनन्दितो निरवद्यो भारतीय-समाजवाद एव रामराज्यापराभिधानः समाश्रयणीयो भारतीयैर्विश्व-कल्याणार्थं च सर्वराष्ट्रैरित्यलं विस्तरेण।

सज्जनाः! जन्मान्तराभिधानेऽस्मिन् निबन्धे आधुनिकसमाजवादस्य चर्चाऽत एव कृता यदद्यतनी दुःखिताऽशिक्षिता च जनताऽस्य विषाक्तप्रभाव आपत्य धर्मनैतिकताभ्यां विमुखा बोभूयतेतमाम्। इममवसरं प्रतिलभ्या-र्थिकवैषम्यनिवारणव्याजेन भारतीयायाः संस्कृतेर्मूलमुत्खन्यते। अत आवश्यकमस्त्येतदवरोद्धुम्, यथा च रामराज्यपद्धत्या जनताया अन्यान्य-दौर्मनस्यादाधिव्याधिभ्यां च निवारणं संपद्येत।

## उपसंहारः

धीमन्तः! पुनर्जन्मसिद्धान्त एक ईदृशः सिद्धान्तो वरीवर्ति, यदुपरि विप्रतिपत्तिपटीप्रावरणनिक्षेपो वास्तविकताया दूरे भवनमात्रं नास्ति, प्रत्युत मानवताया मार्गेऽवरोधविधानमिवास्ति। अतो वेदोपनिषद्गीताप्रतिपादितो देशविदेशयोर्नवीनपुराणदार्शनिकैः समर्थितो मनोविज्ञानप्राणिशास्त्रयोरनुकूलो नैकयुक्तिभिर्निदर्शनैश्च सिद्धः पुनर्जन्मसिद्धान्तश्चन्द्रसूर्याविव सत्यो मानवमात्रस्य कृत उपयोगी च वर्तते। अस्य सत्यतायामुपयोगितायाञ्च विश्वासेन व्यक्तेः समाजस्य च महत् कल्याणं सम्पत्स्यत इत्यत्र नास्ति सन्देहः। सहैवाद्यतन-चार्वाकाणां नवीनैर्वादैः प्रसरन्त्याः स्वार्थमूलककटुतायाः संघर्षस्य च वाता-वरणं विनाशमुपगतं स्यात्, मानवे मानवे च कर्तव्यनिष्ठायाः शान्तिप्रदः सञ्चारः सम्पद्येतेत्यत्रापि नास्ति सन्देहलेशः। एवं हि वर्तमानयुगस्यानेक-समस्या आध्यात्मिक्य आधिभौतिक्यश्च समाहिताः स्युरिति विज्ञातव्यम्।

सारण्य (सारन) मण्डले पुण्ये ग्रामे विष्णुपुराऽभिधे।
जनिस्त्रिपाठिनो लब्ध्वा रामादेर्यो विहारिणः॥ १॥

न्यायवैशेषिके शुक्लात् सूर्यनारायणाद् गुरोः ।
वेदान्ते श्रीहरिहरात् कृपालोश्च द्विवेदिनो- ॥ २ ॥

ऽधीती वादविदग्रणीः स विदितः केदारनाथः कृती,
काश्यां हिन्दुपदाङ्किते च निखिलज्ञानालयेऽध्यापिती ।
नेत्राब्ध्यम्बरलोचनैः परिमिते (२०४२) श्रीवैक्रमे वत्सरे-
ऽपारीत् संस्कृतिपोषणीं शरदृतौ जन्मान्तराख्यां कृतिम् ॥ ३ ॥

इति न्यायवेदान्तसांख्ययोगाचार्येण काव्यतीर्थ-साहित्यरत्नेन काशीहिन्दू-विश्वविद्यालये प्राच्यविद्याधर्मविज्ञानसंकाये दर्शनविभागाध्यक्ष-चरेण साम्प्रतं वैदिकदर्शनविभागे विश्वविद्यालयानुदानायोगस्य प्रधानगवेषकेण वाचस्पतिना ( डी-लिट् ) आचार्य-श्रीकेदारनाथत्रिपाठिना 'दर्शनरत्नेन' प्रणीतो "जन्मान्तरवादः" ( सार्वभौमदर्शनम् )– इतिनामा परीक्षाप्रकरणान्तो ग्रन्थः सम्पूर्णः ।



# जन्मान्तरवादे उपयोजिताः सन्दर्भग्रन्थाः


१. अथर्ववेदः

२. अध्यात्मतत्त्वसुधा 'आचार्य विनोबा भावे'

३. 'आज' पत्रिका, २४ अक्टूबर ७२

४. इस जगत की पहेली ( योगी अरविन्द )

५. ऋग्वेदः

६. A Idialist View of Life ( सर राधाकृष्णन् )

७. कठोपनिषद्

८. कबीरबीजक (कबीरदास)

९. कबीरशब्दावली ,,

१०. कबीर साखी ,,

११. 'कल्याण' वर्ष १० अंक ६

१२. कविताञ्जलि (योगी अरविन्द)

१३. कुत्सित जीवन और दाम्पत्य-विमर्श ( महात्मागान्धी )

१४. कुरानशरीफ भाष्य ( धर्मवीर आर्यमुसाफिर )

१५. गउड़ी ( गुरुनानक )

१६. गीताञ्जलि ( रवीन्द्रनाथ ठाकुर )

१७. चार्वाकदर्शनम् (सर्वदर्शनसंग्रहः)

१८. छान्दोग्योपनिषद्

१९. तत्त्वार्थाधिगमसूत्रम् (उमास्वाती)

२०. धम्मपद (बुद्धवाणी)

२१. नवजन्म, धर्म और जातीयता (योगी अरविन्द)

२२. न्यायकुसुमाञ्जलिः (उदयनाचार्यः)

२३. न्यायदर्शनम् (महर्षि गौतमः)

२४. न्यायमञ्जरी (जयन्तभट्टः)

२५. न्यायसिद्धान्तमुक्तावली (विश्वनाथपञ्चाननः)

२६. पउड़ी (गुरुनानक)

२७. पाश्चात्य-दर्शनों का इतिहास (गुलाबराय)

२८. पुनर्जन्म और क्रमिक विकास (योगी अरविन्द)

२९ प्रोब्लेम आफ रीवर्थ (राल्फशिर्ले)

३०. बृहदारण्यकोपनिषद्

३१. भगवद्गीता

३२. मनीषी की लोकयात्रा (गोपीनाथ कविराज) संकलन

३३. मनुस्मृतिः

३४. मीमांसादर्शनम् (महर्षि जैमिनिः)

३५. यजुर्वेदः

३६. योगदर्शनम् (महर्षि पतञ्जलिः)

३७. रामचरितमानस (सन्त तुलसीदास)

३८. रुद्रयामलः

३९. विवेकानन्द-साहित्य (संकलन)

४०. वेदान्तदर्शनम् (महर्षि बादरायणः)

४१. वेदान्तसूत्रशारीरकभाष्यम् (शङ्कराचार्यः)

४२. वैशेषिकदर्शनम् (महर्षि कणादः)

४३. शास्त्रदीपिका (पार्थसारथिमिश्रः)

४४. सत्यार्थप्रकाश (स्वामी दयानन्द)

४५. 'सन्मार्ग' पत्रिका २६ अगस्त, १९४९

४६. समन्वय डा० भगवानदास)

४७. सांख्यकारिका (ईश्वरकृष्णः)

४८. सुश्रुतः (चक्रपाणि-व्याख्या)

४९. स्कन्दपुराणम्

५०. हिन्दुस्तान की कहानी (पं० जवाहरलाल नेहरू)




# जन्मान्तरवादे अशुद्धिसंशोधनानि

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | २८ | दमिभवात् | दभिभवात् |
| ५ | १२ | पितास्तीति । | पितास्तीति ? |
| ६ | १० | कुतः । | कुतः ? ॥ |
| ६ | २९ | धूर्यैः | धुर्यैः |
| ७ | २३ | नदेव | तदेव |
| ९ | २० | द्रष्ट्र | द्रष्टृ |
| ९ | २२ | नितसं | नितरां |
| १० | ९ | स्मरन्तीति । | स्मरन्तीति ? |
| ११ | २४ | देस्मिन्नेव | देकस्मिन्नेव |
| १२ | ४ | सूत्रेसु | सूत्रेषु |
| १३ | २९ | विभारात्मनो | विभोरात्मनो |
| १८ | १५ | आर्ष | आर्षं |
| १६ | २५ | तद्वादिहापि | तद्वदिहापि |
| १९ | २७ | हृवनस्य | हवनस्य |
| २१ | २६ | विद्वचित्त | विद्वच्चित्त |
| २१ | ३० | वेदेपु | वेदेषु |
| २३ | ३ | स्वधामिः | स्वधाभिः |
| २५ | ५ | मार्गो | मार्गौ |
| २५ | ८ | अथाद् | अर्थाद् |
| २६ | २७ | मरणोतर | मरणोत्तर |
| २९ | १ | रस्मिल्लोके | रस्मिँल्लोके |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१ | १३ | अस्मायमर्थः | अस्यायमर्थः |
| ३७ | १५ | प्रतौयते | प्रतीयते |
| ४५ | १२ | दायित्वहं | दायित्वमहं |
| ४७ | ६ | पशुनास्ति | पशुर्नास्ति |
| ४७ | ८ | शायवस्थानाय | शायमवस्थानाय |
| ४८ | २७ | वर्तंन्ते | वर्तंते |
| ५४ | ५ | मृयुतः | मृत्युतः |
| ५८ | ५ | जीवन | जीवनं |
| ६३ | २५ | विश्वविद्यालस्य | विश्वविद्यालयस्य |
| ६४ | १० | एवं विध | एवंविध |
| ६४ | १५ | पुनजन्म | पुनर्जन्म |
| ६७ | ३ | अ० २ श्लो० | शारीरस्थान ५६ अ० २ श्लो० ६० |
| ६८ | २१ | भ्रातर | भ्रातरं |
| ७६ | १ | पूवं | पूर्वं |
| ७६ | ४ | परीश्रम | परिश्रम |
| ७९ | १८ | सम्पति | सम्पत्ति |
| ८० | २२ | पुरस्कृतो | पुरस्कृता |
| ८० | २२ | विहितश्चेत् | विहिता चेत् |



## प्रणेतुरन्याः कृतयः

१. ब्रह्मसूत्रविज्ञानामृतभाष्यम् (सटिप्पणसम्पाद
२. तर्कसंग्रहन्यायबोधिन्याः संस्कृतहिन्द्योः 'क
३. „ पदकृत्यस्य हिन्दी 'कला' व्याख्य
४. „ दीपिकायाः हिन्दी 'कला' व्या
५. सांख्ययोगकोशः (संस्कृते मौलिको ग्रन्थ
६. आत्मतत्त्वविवेकः (सटिप्पणराष्ट्रभाषानुवादपरिशिष्टाभ्यामुपेतः) रु० ६०.००

### प्राप्तिस्थानम्

१. मोतीलाल बनारसीदास, चौक, वाराणसी
२. चौखम्बा विश्वभारती, „ „
३. „ विद्याभवन, „ „
४. „ संस्कृतसीरीज आफिस, गोपालमन्दिरलेन, वाराणसी–१